# वृत्तरत्नाकरम्

## केदारभट्टविरचितम्-

पिङ्गलमुनि-कृतछन्दःसूत्रसहितम् ।

म्बूकश्मीरराजकीय-श्रीरघुनाथमहाविद्यालय-ज्येष्ठाध्यापक
काव्यतीर्थ रामप्रपन्नशास्त्रि सङ्कलितया
नूतनया रत्नसंग्रहाख्यया व्याख्यया भूषितम्
अन्वयबोधिन्या भाषाप्रभाकरनामिकया च टीकया
* समलङ्कृतम् *



नादिदम्
व्याख्यात्रैव टिप्पणसूच्यादिभिः सुपरिष्कृत्य स्वयं संशोध्य च
लक्ष्मणदास प्यारेलाल संस्कृतमहापुस्तकालय
लुहारी दरवाजा लाहौर

इत्येतद्द्वारा महावीरप्रसादस्य विद्याप्रकाशाख्यमुद्रणालये
संमुद्राप्य प्रकाशितम्



वैक्रम-सम्वत्सरे १९८२ मार्गशीर्षिकायां १७ तारिकायाम्

केवल टाइटलपेज ऐङ्गलो ओरिण्टल प्रेस में छपा ।

THE

# VRITTA RATNAKARA

OF

## KEDAR BHATTA

WITH THE

**PINGLA MUNI'S CHHANDA SUTRAS**

AND WITH

**THE COMMENTARIES**

**Ratna-Sangraha, Anuay-Bodhini and Bhasha-Prabhakara**

EDITED BY

**Kavyatirtha P. Ram Prapanna Shastri**

Senior Professor

SANSKRIT MAHAVIDYALAYA JAMMOO. (KASHMIR)



First Edition 1000.



Published by

**LACHHMAN DAS PYARE LAL,**

PROPRIETOR SANSKRIT BOOK DEPOT, INSIDE LOHARI GATE.

**LAHORE.**



1925

# * वृत्तरत्नाकरम् *

केदारभट्टविरचितम्

## पिङ्गलमुनिकृत-छन्दःसूत्रसहितम्

काव्यतीर्थ—पं० रामप्रपन्नशास्त्रि सङ्कलितया

नूतनया रत्नसंग्रहाख्यया व्याख्यया समलङ्कृतम् ।

अन्वयबोधिन्या भाषाप्रभाकराभिधया च

टीकया विभूषितम् ।

तदिदम्

व्याख्यात्रैव स्वयं संशोध्य टिप्पणसूच्यादिभिः

सुपरिष्कृत्य च

लक्ष्मणदास प्यारेलाल ( लोहारी गेट ) महा पुस्तकालय

इत्येतद्द्वारा

पं० महावीरप्रसाद प्रबन्धेन लवपुरे,

विद्याप्रकाश ( चंगड मुहल्ला, अनारकली ) मुद्रणालये

संमुद्राप्य प्रकाशितम् ।



पुस्तकसंख्या १०००

## उदाहारः । ;

स्वकृत्याऽसाधनेनापि परकार्यप्रणाशने ।
चिन्तयाहर्निशं ग्रस्ता वन्ध्यादौ दौर्जनी स्थितिः ।

### छन्दःशास्त्रस्यानुबन्धचतुष्टयम्

प्रवृत्तौ खलु कृतिसाध्यताज्ञानमिष्टसाधनताज्ञानं च मिलितं सत्कारणं भवति । तच्चानुबन्ध-चतुष्टयतो जायते। अनुबन्ध-चतुष्टयन्तु अधिकारि-विषय संबन्ध-प्रयोजनात्मकम् । तथा चानुबन्ध-चतुष्टयमनवबुध्य प्रवृत्तेरभावादादौ तदभिधानीयम् तदिदं विचार्यते।

वेदाः खलु मुख्यतः परमपुरुषार्थं प्रवृत्ता अनुषङ्गतश्चाद्यमपि त्रिवर्गं ततः सिद्ध्यति "शाल्यर्था हि कुल्यां प्रणीयन्ते' इति न्यायात् इति मान्या । वेदार्थादिप्रतिपादनाय च षडङ्गानि आस्यादीनीव तत एव पृथक् पृथगाविर्भूतानि भूतानीव प्रजापतेः । तानि च

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः ।
छन्दसां लक्षणं चेति षडङ्गो वेद उच्यते ।। इति

तत्र रूपकनिरूपणेनाङ्गविन्यासस्तु इत्थमकारि पाणिनीयशिक्षायाम् ।

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ कथ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥

अपनो अङ्ग जराय के अपरों को अन्धकार ॥
करें पतँग नर जो उन्हें प्रणति वारंवार ॥१॥

(भू०सा०) कार्यप्रवृत्ति में अधिकारी १ विषय २ सम्बन्ध ३ प्रयोजन ४ यह चार अनुबन्ध कारण हैं। उनमें भी प्रयोजन मुख्य है इसको प्रथम कहते हैं—

सब से पहले वेद मोक्ष के लिये प्रवृत्त हुए, प्रसंगतः धर्म अर्थ काम प्राप्ति इन्हीं से सिद्ध हो जाती है।

वेदार्थ ज्ञान के लिये शिक्षादि ६ अङ्ग वेद से ही प्रकट हुए हैं। जिनमें १ यह छन्दः शास्त्र भी है सब अङ्गों को वेद की सहायता में समानता है। छन्दोज्ञान विना वेदों के पठन पाठन में प्रत्यवाय भी लिखा है (पृ०२५०२१।) छन्दोविचिति को पादसादृश्य

पादविकलस्य यद्दौर्विध्यं तदेव छन्दोहीनस्य वेदस्य ।
व्यतिरेकेणाप्यन्यत्र किञ्चिदन्यथा

विना व्याकरणेनान्धो वधिरः कोशवर्जितः ।
छन्दःशास्त्रं विना पङ्गुर्मूकस्तर्कविवर्जितः ॥

अत्र सर्वाण्यपि अङ्गानि समानि नतु न्यूनाधिकता कतमस्यापि । सर्वेषामपि स्वस्वकार्यार्थमवश्यमपेक्षितत्वेन, । अङ्गमहिम्नः प्रदर्शनेऽङ्गत्वेनैवाविशेषेण ग्रहणेन च, । अत एव छन्दसां पादसादृश्यप्रतिपादनेन अधमत्वं मा प्रसाङ्क्षीदिति मुनिरादौ तदुपवर्णनं विदधे । अत्र 'अधीत्यैवेति एवकारो विपरीतक्रमो बोध्यः । साङ्गमेवाधीत्येत्यर्थः । "निष्कारणं ब्राह्मणस्य धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति महाभाष्येऽपि षडङ्गसहितस्यैवाध्ययनविधिरुक्तः ।

तत्र व्याकरणस्याधिक्यप्रतिपादनं तु गणेशदेवीभागवतादिपुराणेषु तत्तद्देवतायाः "यस्य विवाहस्तस्यैव सुश्लाघ्यतेति" न्यायेन तत्स्तुतौ तात्पर्याधायकत्वेन सर्वोत्कर्षप्रतिपादनवद्बोध्यम् मुण्डकोपनिषद्यपि अपरविद्यात्वेनाङ्गानां कीर्तनम् 'द्वे विद्ये वेदितव्ये इतिहस्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च, तत्राऽपरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति, अथ परा यया तदक्षरमधिगम्यते, इत्यादिना शिक्षादीनि प्रतिपादितानि । तथा छन्दोविशेषाणां तत्र तत्र विहितत्वात् । 'यो हवा अविदितार्षेयछन्दोदैवतविनियोगेन ब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति स स्थाणुंवर्च्छति गर्तं पद्यते प्रवा मीयते पापीयान् भवति यातयामानि अस्य छन्दांसि भवन्ति, तस्मादेतानि मन्त्रे मन्त्रे विद्यात् (सा० आ० ब्रा०) इति, अथाऽनुष्टुभा यजति बृहत्या गायति गायत्र्या स्तौतीति श्रवणाच्च तस्मात्तद्वेदनाय छन्दोग्रन्थोऽप्युपयुज्यते ॥ तत्र किं नाम छन्दः? इति प्रश्ने "छादनादिति निरुक्तनिरुक्त्या यदेभिरात्मानमाच्छादयन् देवा मृत्योर्बिभ्यतः तच्छन्दसां छन्दस्त्वम्" इति ब्राह्मणेन

(भू०सा०)दिया है पादों से रहित पुरुष की जो गति होती है। वही छन्दोज्ञानहीन वेदपाठ की की दशा जानो। किन्तु इस से कहीं न्यूनता ना समझ लेना ।

च । इतोऽग्रे "गायत्री गायतेः' इत्यादिना छन्दसां प्रत्येकं निरुक्तथा एतेष्वेव स्थानव्यूहेषु ऋतुच्छन्दःस्तोमपृष्ठस्येत्यादौ, उत्तरत्र छन्दः पदेन अनुष्टुवाद्युक्तेश्च श्यादिकमेव गृह्यतेऽन्यार्थे शक्तिस्तु भाक्तैव तत्र २ इति बोध्यम्, एतद्भेदेन यथा अष्टाध्यायीमहाभाष्यादौ वेदानामपि छन्दस्त्वमभाणि, अयस्मयादीनि छन्दसि" सू० १।४।२० छन्दोवत्सूत्राणि भवन्ति भा०

## निष्कृष्टानुबन्धचतुष्टयम्

तदेवं वेदार्थसाहाय्यदानद्वारा लौकिकच्छन्दोज्ञानेन काव्य कौशलबोधनद्वारा च चतुर्वर्गफलप्राप्तिः परम्परया छन्दःशास्त्रस्य प्रयोजनमिति सिद्धम् । तज्जिज्ञासुरधिकारी छन्दांसि विषयाः, प्रतिपाद्यप्रतिपादकभावो ग्रन्थस्य, बोध्यबोधकभावो जिज्ञासोश्च सम्बन्धः इत्यनुबन्धचतुष्टयमत्रावसेयम् । आदिमपद्यत्रयेण प्रतिपादयिष्यते तत् ॥ शास्त्रस्य ग्रन्थस्य च कर्त्रोर्नामापि गौरवलाघवावेदनद्वारा प्रवृत्तिनिवृत्तिनिमित्तं भवतीति तदप्यवधीयते ।

## छन्दःशास्त्रप्राक्तनकर्तृपरिचयः

शास्त्रस्यास्य कर्ता तु पिङ्गलमुनिः प्रसिद्धः । तद्यथा –

क्षीराब्धेरमृतं यद्वदुद्धृतं देवदानवैः ।

छन्दोऽब्धेः पिङ्गलाचार्यैश्छन्दस्तद्वदुद्धृतमिति ॥

(भू०सा०)"छादनात् छन्दांसि" ऐसे निरुक्त में लिखा है अर्थात् मृत्यु से डरते देवता लोक, छन्दों से अपने को छिपाते हैं पुण्यजनक रामायण स्तोत्रादि पाठरचनादि में भी छन्दःशास्त्र की आवश्यकता है । अतः सिद्ध हुआ, कि परम्परया चतुर्वर्गफलप्राप्ति इसका प्रयोजन है । उसका जिज्ञासु अधिकारी छन्दोज्ञान विषय और ग्रन्थ–प्रयोजन का प्रतिपाद्य–प्रतिपादकभाव तथा जिज्ञासु–ग्रन्थ का बोध्य–बोधकभाव सम्बन्ध है । यह पहले ३ श्लोकों से सूचित करेगा । शास्त्र और ग्रन्थकर्ता का वृत्त भी गौरवादि आधायक होता हैं । अतः इस विषय में कुछ लिखते हैं ।

इस शास्त्र के प्राचीन कर्ताओं में १ पिङ्गल मुनि प्रधान हैं। यह उल्लिखित अग्नि पुराण (  ) और महाभारत से ज्ञात हुआ है। इसी के सूत्रों में कई एक और छन्दःशास्त्रकारों के नाम भी लिखे हैं । परन्तु आजकल वैदिक-लौकिक छन्दों का बोधक सर्वाङ्ग पूर्ण यही ग्रन्थ अष्टाध्यायीवत् वेदाङ्ग माना है अब इसकी यथामति कुछ आलोचना करते हैं ।

अग्निपुराणे अग्निनाम्ना ऋषिरपि बहूनि छन्दांसि ॥

छन्दो वक्ष्ये . मूलजैस्तैः पिङ्गलोक्तं यथाक्रमम् ॥

सर्वादिमध्यान्तगलौ म्नौ भ्यौ ज्रौ स्तौ त्रिका गणाः ॥ अ० ३२८ श्लो० १ इत्यादिना वर्णितवान्। अन्येषामपि बहूनां महर्षीणां ग्रन्था अत्रासन् येषां नामानि पिङ्गलग्रन्थे उपलभ्यन्ते यथा 'उरोबृहती यास्कस्य' सू० ३। ३० 'सर्वतः सैतवस्य' सू० ४।१८ 'सिंहोन्नता काश्यपस्य' सू ७।६ "अन्यत्र रातमाण्डव्याभ्याम्" सू० ८। ३५ परंतु ते ग्रन्था लुप्तप्राया एव प्रतीयन्ते ॥ वैदिकछन्दःप्रतिपादनादस्यैव पाणिन्यष्टकवदस्य वेदाङ्गत्वं जेगीयते विपश्चिद्भिः ॥

यद्यपि 'अयं महर्षिवरः कस्मिन्काले कां भूमिमलञ्चकारेति वाङ्मनसाऽगोचरमन्येषामिव भारतीयानामीदृशां, तथापि एतद्विषये यत् २ समुपलब्धं क्षोदीयस्यां मत्यां च विवेचितं, तत् २ विदुषां पुरस्तात् कुसुमाञ्जलिरिव उपनेतुमनुचितमपि परीक्षणार्थं केवलमुपनीयते।

पिङ्गलमुनिदेशः

एतद्ग्रन्थरचनातोऽरण्यजलशीतप्रधानप्रदेशीयोऽयमिति प्रतीयते । (भू०सा०) यह मुनि नाग उपनाम से लिखे जाने पर भी महाभाष्यकार पतञ्जलि मुनि से विलक्षण नाम कृति और लेख शैली से भिन्न ही प्रतीत होता है पिङ्गल मुनि का देशकाल निकालना मादृशजन की निराधार बुद्धि से बड़ा ही दुःसाध्य है ॥

तो भी मुझे इनही ग्रन्थों से जो कुछ लब्ध हुआ और क्षुद्र बुद्धि के विमर्श में आया सो योग्य न होने पर भी बतौर परीक्षा के आप की सेवा में उपहार (भेटा) कर देता हूं। यह विद्वानों के लिए पुष्पाञ्जलि और प्रिय, सज्जन छात्रगण के अर्थ नैवेद्य (प्रसाद) है

पिङ्गल का देश।

इस ग्रन्थ की रचना से प्रतीतहोता है कि यह वन-पर्वत-जल-शीत प्रधान देश का है,क्योंकि इसके ग्रन्थ में यह नाम उपलब्ध होते हैं ॥

मैंने इस विषय के कोई भी युक्तिवाज़ों के ग्रन्थ नहीं देखे, तथापि मेरी सम्भावना है कि यह कश्मीर में हुआ हो। वही देश वन उपवन पर्वत जल शीत प्रधान और पूर्वकाल में विद्यागृह तथा नागों की वसति थी, उदीच्यवृत्ति और लौकिकछन्दों में सबसे पहले आर्याप्रकरण का उपन्यास भी मेरे इस अनुमान को सुपुष्ट करता है।

यतोऽस्य ग्रन्थे

| | | | |
|---|---|---|---|
| वानवासिका | पुष्पिताग्रा | क्रौञ्चपदा | वातोर्मी |
| हरिणी | वसन्ततिलका | श्येनी | विद्युन्माला |
| शार्दूलविक्रीडितम् | चम्पकमाला | अचलधृतिः | द्रुतमध्या |
| चित्रकम् | भ्रमरविलसितम् | जलधरमाला | इन्द्रवज्रा |
| लवली | हंसरुतम् | वेगवती | चण्डवृष्टिप्रपातः |
| मञ्जरी | कोकिलकम् | अमृतधारा | सैतवविपुला |

इत्यादिनामानि समुपलभ्यन्ते। मयैतद्विषयक-यौक्तिकज्ञानग्रन्था नावलोकितास्तथापि निजानुमानतः कश्मीरेष्वयमभूदिति विज्ञायते। स एव देशोऽरण्यजलशीतप्रधानो विद्यावेश्म नागानां राज्यमपि पुरा आसीत्। तथाहि-नागप्रार्थितो-विष्णुरुवाच।

तमाह भगवान्देवो वासुकिं भयविह्वलम्॥
सतीदेशेऽत्र पुण्योदे सरस्यम्बरभूषिते॥१॥
धर्मिष्ठः सहितो नागैर्वसस्वाऽमितविक्रमः।
तस्मिन्सरसि ये स्थानं करिष्यन्ति भुजङ्गमाः॥२॥
तस्य तस्याऽहिशत्रुर्वै न हनिष्यति जीवितम्।
सतीदेशे कृतस्थानं तिष्ठन्तमकुतोभयम्॥३।
न हनिष्यति नागेन्द्र! नागारिर्मम वाहनः।
नीलमतपुराणे। अ० ७। ×। × ×।
तत्र स्थानं च नागानां नासीद्गरुडतो भयम्॥

नागान्तमस्य नाम भुजगशिशुभृता भुजंगप्रयातादिषु नागवाचिनामकछन्दोरचना च तथा अद्यापि तत्र अनन्तनाग-वैरिनाग-शेषनागे (भू०सा०) नीलमतपुराण अ०७के श्लोक भी इसमें प्रमाण हैं। पुराणान्तर भी इसी के पोषक हैं। महाभारत में अनन्तनाग वैरीनाग आदि कुण्डतीर्थों का माहात्म्य लिखा है "यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति" प्राकृत पिङ्गल छन्द के मङ्गलाचरण में "पढमं भाषत रम्भो णाओ सो पिंगलो जअइ" महाभारत के अध्याय ३५ से ५३ पर्यन्त देखने से यह दृढ हो गया कि पिङ्गल मुनि जी नागोपनामक थे। अग्निपुराण अ०३२८ से छन्दःसूत्रकर्ता भी यही ज्ञात हुए हैं।

त्यादि नागपदघटितनगराद्युपलम्भः। तत्तत्पुरुषनाम्नैव नगर—जल कुण्डादीनां नामान्यासन्निति तु सुप्रसिद्धमेव। यादृशस्तत्र वसन्तोत्सवस्तादृशो नान्यत्राद्यापि प्रायोऽवलोक्यते अत एव वसन्ततिलक-लता पुष्प-वृत्त-पङ्क्ति-न्नामान्येतद्ग्रन्थे बहुशोऽवलोक्यन्ते। अत्रैकस्य छन्दसः गौरीति नाम 'गौरी नौ न्सौ ग्' ७।४ गौरी वितस्तात्वेन परिणतेति प्रसिद्धं कश्मीरेषु। वितस्ता च नदी तत्र।

गुहोन्मुखी[1] नागमुखा पीतभूरिपया रुचिम्।
गौरी यत्र वितस्तात्वं याताप्युज्झति नोचिताम्॥ इति

राजतरंगिणी १ म तरङ्गे श्लोकः २६ मधुमतीनामवमत्र छन्दः मधुमती चाऽत्र नदी। अस्य छन्दसः गुरुलघुविन्यासानुसारो हि तत्प्रवाहः

आलोक्य शारदां देवीं यत्र सम्प्राप्यते क्षणात्।
तरङ्गिणी मधुमती वाणी च कविसेविता॥ रा०त०१०त०श्लो०३७

सैतवमुनिरत्रत्य एव यतोऽत्र स्थाने २ सेतवः नदमध्यकनगरत्वात् ये महासेतूपरि निवसन्ति। ते तन्नाम्नैव बोध्यन्ते "उद्धर्षिणी काश्यपश्येति" सूत्रतोऽपि ज्ञायते। यतः कश्यपेन कश्मीरभूमिर्निवासिता तन्मतमपि तत्रासीदेव काव्यरचनाया द्वे एव स्थले दृश्येते कश्मीर

(भू०सा०) उक्तप्रमाणों से वैरीनाग अनन्तनाग शेषनाग इत्यादि जलकुण्ड और नगरों के नाम। तथा प्रसिद्ध कथानकों से कश्मीर को नागों की वसति होने में तो अब कोई संदेह ही नहीं रह गया है। गौरी एक छन्द का नाम है गौरीदेवी यहां वितस्ता रूप से परिणत हुई है राज त०। त० १ श्लोक २६ से प्रसिद्ध है। मधुमती नदी भी यहां ही है जिसके नाम से १ छन्द बना है (राज त० त० १ श्लोक ३७ देखो)। सैतव मुनि भी यहां के ही प्रतीत होते हैं जिनका मत पिङ्गल मुनि ने "सर्वतः सैतवस्य" (अ० ५ सू० ४) में लिया है। यह देश नदी प्रधान है। जो बडे २ बान्धों पर रहते हैं उन्हें सुत्थू[2] वाले कहते नागराज ने कश्यप का मत भी लिया है। कश्यप ने ही कश्मीर बसाया और नागों को

---

(टि०) १ इदं पद्यमपि पूर्णतयात्र सूत्रे वर्णसाम्यमादधाति। गुहः ग् गुरुः अन्ते नागमुखा नगास्या नौ न्सौ चेति नौ गौरी सा नदीति।

२ कश्मीरी भाषा में सुत्थू (सेतु) पुल या बान्धे को कहते हैं॥

दक्षिणदेशाख्ये । ते तत्रत्या नागा इच्छानुसारिशरीरधारित्वात्, शेषनागादीनामवतारत्वाद्वा राज्यादिप्रबन्धकर्तार आसन्निति नागा इत्युच्यन्तेस्म । केषांचिद्, ईश्वरसृष्टि शक्तिमविदुषामेतत्कथनं यच्च नागोपासकत्वान्नागजातीयत्वाद्वा नागा उत्पन्तेस्मेति ॥

## पिङ्गलमुनिकालः

समयश्चेतोऽपि ज्ञातुमतीव दुष्करः । किन्तु व्यासदेवस्याग्नि-पुराणे नामदर्शनात्ततः प्राचीनः स इति ॥

यास्कनिरुक्तेऽपि सप्तमे बहूनां छन्दसां निर्वचनानि प्रदर्शितानि तेन कश्चिच्छन्दोग्रन्थस्ततः प्रागभवदेव एष वान्यो वा, नागानां प्रादुर्भावसमये एष ग्रन्थो निरमायि । "उरोबृहती यास्कस्य" पि० सू० ३ । ३० इत्युक्तेरयमस्मादर्वाचीन इति तु न मन्तव्यम् उरोबृहती नाम्नश्छन्दसोस्मिन्निरुक्तेऽदर्शनात् निरुक्तकर्तुर्यास्कस्यैत-द्यास्कभिन्नत्वेन निर्द्धारणात् । कश्चिद्यास्कोऽस्मादाद्यः समसमयो वा[1]

(भू०सा०) दिया है । विद्यास्थान भी कश्मीर ही मुख्यतः गिना जाता था । वह नाग इच्छाधारी होने से सांसारिक कार्य करते थे वे देवताओं के अवतार थे । वा नागोपासक थे वा नाग जातीय मनुष्य ही होंगे ॥

## पिङ्गलमुनि का काल

देश ज्ञान से भी कठिनतम है । किन्तु इतना कह सकते हैं कि यह व्यासदेव से प्राचीन हैं । क्यों कि अग्निपुराण तथा महाभारतमें इनका नाम उपलब्ध होता है । और कश्यप ऋषि की सन्तान है । ऊपर दोनो के श्लोक देखो । यास्क के निरुक्त में छन्दों के निर्वचन आते हैं । जिससे प्रतीत होता है कि इससे पहले भी कोई छन्दोग्रन्थ था यह हो वा कोई और, यह नहीं कह सकते ।

---

(टि०) १ अधुना स ग्रन्थ उपलब्धस्तत्र उरोबृहतीति छन्दोपि निष्कान्तं छन्दोविचितिरिति तन्नामापि उपलब्धं यद्विषये "प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः" इत्या-द्यभिहितम् वृत्तर० अ० ६ श्लो० २। कुत्र २ चित् पिङ्गलसूत्रग्रन्थोऽपि एतन्नाम्नोच्यते छन्दोमान–छन्दोभाषा–छन्दोविचिति–छन्दोविजिनी इति पदानि छन्दोग्रन्थनामत्वेन व्यवहृतानि प्रतीयन्ते पाणिनीयगणपाठे (अण् ऋगयनादिभ्यः । ४।३।७३ इति सूत्रोक्त-ऋगयनादिगणे) । यास्ककृतैव चेच्छन्दोविचितिः तर्हि स यास्कः पाणिनिमुनितोपि प्राचीनः ॥

स्योदिति तु निरर्गलं परन्तु सोपि छान्दस एव स्यात् ॥ नागाश्च कश्यपापत्यानि तदुक्तं महाभारते आदिपर्वणि अ० ३५

शेषः प्रथमतो जातो वासुकिस्तदनन्तरम् ।
ऐरावतस्तक्षकश्च कर्कोटक-धनञ्जयौ ॥ इत्यारभ्य
निष्ठानको हेमगुहो नहुषः पिङ्गलस्तथा ॥ इत्यादि--

कश्चिन्मुनिरपि पिङ्गलोऽभूत् तदुक्तं तत्रैव आदि प० अ० ५३ ।

ब्रह्माऽभवच्छार्ङ्गरवोऽथाध्वर्युश्चापि पिङ्गलः ॥

परन्तु सर्पयाग एतदुक्तेरयं नैतद्ग्रन्थकर्ताऽस्य नागोपनामत्वात् एवं चैतत्सर्गादावस्य निर्मितिरिति सिद्धम् ॥

## ऐतिहासिकं किञ्चित्

केचिदत्रेममितिहासमाचक्षते "यद्भूमौ कदाचित्परिभ्रमन्यथेच्छं श्रीपिङ्गलनागो गरुड़वशगोऽभूत् । तेनात्तुमाक्रान्तस्तमाह यदस्ति वत्स ! मे सविधे छन्दःशास्त्ररत्नं यन्मयि हते विनङ्क्ष्यति। अतस्तावद्धवा

पिं०सू० ३।३०में यास्क का नाम आता है । इससे यह नहीं समझ लें कि यह निरुक्त से अर्वाचीन है। क्योंकि इस निरुक्त में उरोवृहती छन्द का कहीं नाम नहीं आता। यह किसी अन्य यास्क (छान्दस) पिङ्गल मुनि से पूर्व हुआ है। यह तो कहना ही पडेगा, अब यह ग्रन्थ भी हस्त लिखित डी० ए० वी० कालेज के पुस्तकालय में आगया है उरोवृहती छन्द भी इसमें मिल गया । एक पिङ्गल ऋषि भी हुए हैं। वह इससे पृथक् हैं क्योंकि उनका नाम सर्पयाग में म०भा० १ प० ५३ अ० में आता है, एवं च कश्यप जी से कुछ काल पीछे सृष्टिप्रकाश के आदि में इनकी उत्पत्ति कह सकते हैं । जो ऋषियों की शताब्दी में थी श्रीपिङ्गलनाग पाणिनिमुनि के छोटे भाई थे यह बात भी रिसर्च स्कौलरों ने ढूंढ़ निकाली और वलिष्ठ प्रमाणों से सिद्ध भी कर दिखाई। जो टिप्पणी में धर दी है । यह मुझे श्रीमान् भगवद्दत्त जी बी० ए० से विज्ञात हुआ ॥ एवं च इन दोनों में से १ का देशकाल ज्ञान होने पर दूसरे का भी हो सकता है ।

## कुछ इतिहाससम्बन्धि वृत्त

एक समय पिंगल नाग भूमि में फिरते २ गरुड के हाथ आगये । उन्हों ने कहा १ मेरे पास अपूर्व छन्दःशास्त्र हैं यह तुम पढ़ लो फिर मुझे पकड़ लेना मैं जाने लगा तो बता दूंगा । ऐसे प्रतिज्ञा करके पढ़ाने लगे,प्रस्तारादि लिखते समझाते उत्तर से दक्षिण समुद्र तक पहुंच गये । अन्त में "भुजंग प्रयातं यः" यह सूत्र कह कर समुद्र

नुपसद्य परिगृह्णातु, पश्यतु च मदीयां चातुरीं यन्मयैकथा विन्यस्यते तद् द्वितीयवारं न विलेखिष्यते। तदनन्तरं प्रकामं भवान् भक्षयतु मामहश्च भवन्तं संसूच्यैव गमिष्यामीति एवं प्रतिपन्ने हरिवाहने सर्वमिदमागमरत्नं नागराजस्तस्मिन्सञ्चारयाञ्चकार। उत्तराम्भोनिधितटाद्दक्षिणपारावारतीरपर्यन्तं समस्तं रसातलं प्रस्तारादिप्रत्ययभेदप्रभेदैः परिपूरयन् पयोधिप्रान्तं प्रयातो "भुजङ्गप्रयातं यः" इति सूत्रमभिधाया ऽन्तरं जलधेरियाय,ततो गरुडो जगाद। गुरो! किमिदं तेनाभाणि। वत्स! चरम वचनार्थं मे विचारयेति तथेति नागारिर्विरराम इति प्राकृतपिङ्गलीयवार्तिकटीकाकारः चन्द्रशेखर एतदनुगृह्णाति।

यो विविधवर्णमात्राप्रस्तारात् सागरं प्राप्य।
गरुडमुदञ्चयदतुलः स हि नागः पिङ्गलो जयति॥

छन्दोबन्धप्रचारः

बहुतिथं कालमेतस्य वेदेषूपयोगो ज्ञान-ज्ञापनादिकं चाभूत् कदाचित्तु दैवी पद्यात्मिका एषा सरस्वती गङ्गेव शिवे वल्मीकजन्मनि मुनौ

(भू०सा०)में लीन हो गये। गरुड ने कहा क्यों महाराज प्रतिज्ञा मिथ्या कर दी। तो नाग जी बोले मेरे अन्त के सूत्रार्थ को विचारो क्या है?। सुनकर गरुड़ जी को सन्तोष हुआ॥

---

भूमिका पृ० ८ प० ६ सिद्धमितस्य अग्रिमः पाठः अथवा

(टि०) पिङ्गलनागोऽष्टाध्यायीयसूत्रकर्तुः कनिष्ठो भ्रातेति केषांचित् पुरातत्त्वान्वेषिणामनुसंधानम्। तथाहि षड्गुरुशिष्यः (विक्रम सं० १२४४ तमे) स्वरचितायां वेदार्थप्रदीपिकायामलेखीदेतत्।

तथाऽत्र सूच्यते हि भगवता पिङ्गलेन पाणिन्यनुजेन "कुत्रचिन्नवकाश्चत्वारः" [ पिङ्गलच्छन्दोविचितिः ३। ३३ ] इति। परिभाषा ७। ६ ऋग्वेदीयपाणिनीयशिक्षाप्रकाशाभिधव्याख्यायाश्च श्लो० २

व्याख्याय पिङ्गलाचार्यः सूत्राण्यादौ यथायथम्।
शिक्षां तदीयां व्याख्यास्ये पाणिनीयानुसारिणीम्।

तदग्रेऽपि "ज्येष्ठभ्रातृभिर्विहिते व्याकरणेऽनुजनुस्तत्रभवान् पिङ्गलाचार्यस्तन्मतमनुभाव्य शिक्षां वक्तुं प्रतिजानीते" एतेन षड्गुरुशिष्यमतं स्वीकृतम् ( एतेन पाणिनिमुनिसमकालत्वमस्य इत्यपि प्रतीयते )॥

समवातरत्। नद्यां स्नातुं गच्छतः पथि क्रौञ्चमिथुनादेकं हतवतो व्याधस्य क्रौञ्चीसमाक्रन्दस्य च दर्शनात् शोक एव श्लोकीभूय तन्मुनेर्मुखाद्बहिर्निरगात्। ("शोकः श्लोकत्वमागतः" वा० रा० )

मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

तत्प्रभृति लोकवेदयोरस्य समुपयोगः समजनि। लोकेऽपि पुराणेतिहासकाव्यादावेतज्ज्ञानमन्तरा छन्दोयतिभ्रष्टादीनि विविधानि दूषणानि गायने उच्चारणे च भवन्तीति साहित्यशास्त्रतोऽवसेयानि।

अत्रान्येपि भूयांसो ग्रन्थाः संभवेयुः, येऽद्याऽस्मन्नयनानि प्रिया इव नाह्लादयन्ति तत्संग्रहसंस्कारविस्तारादीनि च बहुभिर्महर्षिभिर्विहितानि भवेयुः। किन्तु तेऽपि ग्रन्थास्तत्कृता अद्यश्वो नोपलभ्यन्ते येन तत्तद्विषयेऽपि परिपक्वनविवेचनादि विधीयताम् । किन्तु पिङ्गलमुनिसंकलितं छन्दःशास्त्राख्यमेवैकं त्रुटितस्फुटितं पुस्तकं विदुषां मनांसि विरहिणः प्रियवार्तेव समाश्वासयति । तत्रैव च "सर्वतः सैतवस्य" ५।१८ "सिंहोन्नता काश्यपस्य" ७।६। इत्यादिसूत्रेषु तन्नामानि श्रूयन्ते । अन्यथा तज्ज्ञानमपि बहुसम्भवतायामापद्येतेति ।

अयं च वृत्तरत्नाकरो नाम ग्रन्थः केदारभट्टेन पव्येकात्मजेन संकलित इत्येतदाद्यपद्यत्रयेण प्रतीयते। अत्र च यदेव लक्षणं तदेवलक्ष्यमिति पूर्वेषां ग्रन्थेभ्योऽस्यागतार्थताऽकारि।

## छन्दोबन्ध का प्रचार

**(भू०ला०)** बहुत काल तो वेदों में ही था। फिर कभी पहले,पहल शिव जटाओं में गङ्गा की तरह वाल्मीकि मुनि में इसका अवतार हुआ । वे नदी में स्नान करने गये। एक व्याध से क्रौञ्चयुग में से १ को मार डालने पर दूसरे के आक्रन्दन देख अतिकरुणा से यह श्लोक वन के उनके मुख से निकला । कि ओह व्याध ! तुम अपनी सब आयु मत भोगो, जो कि तुमने क्रौचों के जोडे से १ को मार दिया ॥ इससे और भी कई एक अर्थ निकलते हैं, कई एक और ग्रन्थ भी छन्दों पर लिखे गये होंगे जिनका जिकर पिङ्गल मुनि ने किया है। पर आज हमारे हाथ पिङ्गल मुनि का ही छन्दोग्रन्थ लगता है जिसके आधार पर **वृत्तरत्नाकर** बनाया है। इसके आद्यन्त के श्लोकों से प्रतीत

केदारभट्टदेशः

एष च केदारभट्टेत्युपाधिना दाक्षिणात्य इति भाति। कश्मीरेष्वपि यद्यपि भट्टशब्दान्तानि नामान्युपलभ्यन्ते तथापि दक्षिणदेशादेत्यैव ते तत्र निवासं चक्रुः। अस्य काश्मीरीकत्वपि सयुक्तिकं, यतः पं०रामचन्द्रो नाम लङ्काद्वीपं(सिंहलद्वीपं) गतोऽस्य स्वदेशीयप्रेरणैवात्र व्याख्यां विधाय स्वगुरवे समर्पितवान् ॥

केदारभट्टकालः

एष च छन्दोमञ्जरीकारगङ्गादासतः प्रागभूदिति—

व्यवहारोचितं प्रायो मया छन्दोऽत्र कथ्यते।
प्रस्तारादि पुनर्नोक्तं केवलं कौतुकं हि तत् ॥७॥

इत्येतत्पद्योक्तेन वृत्तरत्नाकरप्रपञ्चितप्रस्तारादिनिषेधेन ज्ञायते।

सन्ति यद्यपि भूयांसश्छन्दोग्रन्था मनीषिणाम्।
तथापि सारमाकृष्य नवकार्थो ममोद्यमः ॥

इति श्लोकतो विशेषाधानहेतोश्च ज्ञायते। यद्वहुशः छन्दोग्रन्थानवलोक्यैषा निर्मितेति। वृत्तरत्नाकरं विहायाऽपर आकरग्रन्थो नावलोक्यते लोके ततश्च समायातमेतत् यदेनद्वीक्ष्यैव विरचितेति। गङ्गादासस्तु मुरारिकवितः अर्वाभूगत् इत्येतदुदाहरणेषु मुरारिमिश्रकृतानर्घराघवश्लोकदर्शनतो निर्णीयते। दासान्तनाम्ना चातीवार्वाचीनता प्रतीयते। रामानुजीयवैष्णवमतानुसृतेः। तस्य वैष्णवत्वस्य दृढतरनिश्चयकारकत्वं तु तदीयोदाहरण-श्लोकग्रन्थान्तरैश्च प्रकाश्यते।

केदारभट्ट का देश

(भू०सा०) हुआ कि केदार भट्ट इसके कर्ता हैं और वे "शैव शास्त्रज्ञ" इत्यदि पितृविशेषणों से कश्मीरी हैं शैवागम का वहां से ही प्रादुर्भाव तथा प्रचार होने से वही इसका केन्द्र है ॥

केदार भट्ट काल

यह केदार भट्ट गङ्गादास से प्राचीन है उसने इसको देखकर छन्दोमञ्जरी बनाई है। वह तो मुरारि कवि से पीछे हुआ। उसके पद्य का आश्रयण करने से दासान्त नाम और विष्णु भक्ति के श्लोकों का उदाहरण देने करके वैष्णव (वैरागी)

किञ्च "शै॰शास्त्रज्ञः-शैवसिद्धान्तवेत्ता" इत्येतस्य पितुर्विशेषणे आद्यन्तपद्ययोर्लभ्येते तेनास्य शैवशास्त्रप्रचारोत्तरत्वं विज्ञायते तत्प्रचारश्च बौद्धह्रास-शंकराचार्य्यमत-मध्येऽभूत् किञ्चास्यैका टीका लङ्का (सिंहल) द्वीपत उपलब्धा या पराक्रमबाहोर्बौद्धस्य मौर्य्यस्य राज्ञोऽमात्यभूतेन रामचन्द्रेण महाविपश्चिता विरचिताऽस्ति । अयञ्च रामचन्द्रः पूर्वं श्रौतस्मार्त्तमतीयः कश्मीरदेशीय वीरवटिकानामके अग्रहारे गृहीत-जन्मा न्यवसत् । स एव कालान्तरे (वै॰सं॰४५१)लङ्काद्वीप (सिंहल) गतो राहुलाख्यबौद्धाचार्य्याद् बौद्धधर्मं शिश्रिये इति तद्ग्रन्थतः प्रतीयते तत्परिचयस्तु मुद्रितपञ्चिकासनाथपुस्तकभूमिकायां दत्तोऽवलोक-नीयः । एवञ्चैतज्ज्ञायते यद्बौद्धैरेव तत्र नीता प्रचलिता बौद्धप्रचा-रोत्तरन्तु किमपि मतमद्यपर्यन्तन्न तत्र प्रचलितमिति तेन तन्मतह्रास-काल एवास्येति सुस्पष्टम् । कलियुगीय त्रयोदशाधिकद्वाविंशशत(२२१३) संवत्सरोत्तरं पाटलीपुत्रपत्तने अभिषिक्तेन धर्माशोकेन स्वजातीया राजकुमारा लङ्काद्वीपं प्रेषिताः तेषां वंश एव मौर्य्यत्वेनाख्यातस्तत्रा-भूत् । यन्मध्ये पराक्रमबाहुस्तत्रत्यजयवर्द्धनाख्ये पुरे तदाऽभिषिक्तो-ऽभूत् । तेनोपर्युक्तसमयोत्तरमेव तत्रास्य पुस्तकस्य प्रचारोऽभूत् । अशोकराज्यकाल एव बौद्धमतप्रगाढताऽभूत् । इतो बहुकालानन्तरं शिवसूत्राविष्कारोत्तरं शैवागमप्रादुर्भावस्तत्समनन्तरं वृत्तरत्नाकर-विरचना समजनि ॥

(भू० सा०) होने से, अति बहुत अर्वाचीन प्रतीत होता है रामचन्द्र बौद्ध ने इस पर टीका बनाई है । जो कश्मीर के बीजविहाडा ग्राम में उत्पन्न हुआ था और सिंहल द्वीप में मौर्य पराक्रमबाहु बौद्ध राजा का प्रधान वजीर था । उसने अपने गुरु राहुलनामक बौद्ध को यह ग्रन्थ समर्पण किया ॥

२२१३कलि संवत् में पटना नगर में अभिषिक्त हुए धर्माशोक ने स्वजाति के राज कुमार सिंहलद्वीप को भेजे थे । उन्हीं का वंश वहां मौर्यत्वेन प्रसिद्ध हुआ । उसी वंश का राजा पराक्रमबाहु जयवर्द्धनपुर में अभिषिक्त हुआ था, अशोकराजा के बहुत

शिवसूत्राणि शिलायां लिखितानि काश्मीरिकशिवोपलग्रामे नाग बोधिबौद्धकाले वसुगुप्ताचार्येण लब्धानि तदुपरि बहुतिथे काले गते अभिनवगुप्तपादाचार्य्येण टीका व्यरचि तदवलम्ब्य क्षेमराजेन शिवसूत्रविमर्शिनी व्याख्या व्यधायीति विमर्शिन्यां स्पष्टम् ।

अभिनवगुप्तपादाचार्यकालश्च ईश्वरप्रत्यभिज्ञाविमर्शिनीग्रन्थान्ते ।

"अन्त्ये युगांशे तिथिशशिजलधिस्थे मार्गशीर्षावसाने" इति पद्यांशेन कलियुगीयः पञ्चदशाधिकैकचत्वारिंशशततमितो दत्तोऽस्ति । स च वैक्रमः एकसप्तत्यधिकैकसहस्रतमः १०७१ (ईस्वीयः १०१४) समायाति ॥

म॰ म॰ मल्लिनाथेनानुपूर्व्यतो रघुवंशादिटीकासु एतल्लक्षणान्यनुसृतानि अतस्ततो बहुप्राग्भवोऽयमिति स्पष्टं विज्ञायते ।

मम सविधे साम्प्रतमस्य ( वृत्तरत्नाकरस्य ) टीकाद्वितयं विद्यते रामचन्द्रीया पञ्जिका, नारायणभट्टीया च, तत्राद्या एकपञ्चाशदधिकचतुःशततमे वै॰सं ४५१ सिंहलद्वीपे रचिता परा द्व्यधिकषोडशशत (१६०२) तमे वैक्रमे काश्यां रचिता तेनाद्यस्यां प्राचीनत्वन्तु स्फुटमेव । किञ्च नारायणभट्टेन पञ्जिकाया अंशांशतोऽपिस्मृतिर्नादायि ॥

अहं तु पूर्वापरीयोच्चावचवचनपर्यालोचनेन वैक्रमैकादशशतकमध्यभागमस्य विरचनसमयं संप्रति पर्यन्तं निश्चिनोमि ॥

(भू॰ सा॰) काल अनन्तर शिवोपल ग्राम में शिला में शिवसूत्र लिखे पाये थे। उन दिनों बोधि बौद्ध का प्रचार कश्मीर में था। उन पर बहुत काल पीछे ईश्वरप्रत्यभिज्ञाविमर्शिनी टीका अभिनवगुप्ताचार्य ने बनाई है। उसके अनन्तर शैवागम के गाढ़ प्रचारता में वृत्तरत्नाकर बना । अभिनवगुप्तपादाचार्य ने अपना समय कलियुगीय (४१०१५) स्वयं लिखा है जिसका विक्रमी [ १०७१ ] और ईस्वी १०१४ आता है ।

सो इससे अनन्तर और मल्लिनाथ से बहुत काल पहले हुवा है, क्योंकि मल्लिनाथ ने आनुपूर्व्य से इसके लक्षण लिये हैं । मल्लिनाथ का समय तो ख्रीस्त १४ वां शतक रिसर्च वालों ने निर्णय किया है ।

---

(टि॰) १ मल्लिनाथ—पण्डितश्चान्ध्रदेशे खिस्ताब्दीयचतुर्दशशतक आसीदिति नवीनविदुषां निर्णयः

# व्याख्याविधानहेतुः

अत्र बहवो व्याख्याः सन्ति बालबोधजनकतया लक्ष्य-लक्षण संगमिका नासीत्कापीदृशी टीकेति तदर्थं, किञ्चानया प्रचलितया आर्षस्याङ्गस्य मन्दप्रचारताऽजनीति तत्प्रचारार्थं च ममात्रायासः। यत इमं ग्रन्थं परीक्षाफललिप्सया व्युत्पित्सया वा पठन्तः आर्षग्रन्थमार्गपरिचिताः सन्तस्तदध्ययनेन ऋषेॠणमपनयन्त आर्ष पुस्तकपठनफलमपि अल्पायासेन व्युत्पद्यमाना लभेरन्निति॥ अधुनाऽऽशासे यदिमां मामिकां रत्नसंग्रहाख्यां व्याख्यां समुपाश्रयन्तोऽन्तेवासिनो मदायासं कृतार्थयिष्यन्तीति॥

## क्षमापनम्

विदुषामग्रे चैषाऽभ्यर्थना यन्मया प्राचीनतत्त्वविदां कान्यपि पुस्तकानि नावलोकितानि तानि, नच काप्यन्या विशेषसामग्री समुपलब्धा। किन्तु निजमतिमनुसृत्य यत्किंचिदत्र विन्यस्तम्। किञ्च संभवोस्ति यद्ग्रन्थेऽपि बहवोऽशुद्धयो बुद्धिदोषादक्षरयोजक-संशोधक भ्रान्त्यादिभिश्च तिष्ठेयुरिति। ताः करुणया संशोध्य प्रचारयेयुः। मामपि च तथा सूचयेयुर्येन द्वितीयस्यामावृत्तौ तथैव सुमुद्रितं भवेदिदमिति।

## व्याख्या बनाने का मुख्य उद्देश्य

(भू०सा०) इस (वृत्तरत्नाकर) के प्रचार से आर्ष ग्रन्थ तिरोहित सा हो गया था। और इसकी भी लक्ष्य–लक्षण संगमक सरल व्याख्या कोई न थी। इस लिये इस रत्नसंग्रह व्याख्या के रचन में प्रवृत्ति हुई। इसमें ऊपर सूत्र देकर नीचे वृत्तरत्नाकर के लक्ष्य–लक्षण उदाहरणत्वेन दिखला दिये हैं। पण्डित जनों को चाहिए कि इसी का पठन पाठनादिकों में प्रचार करें। जिससे आर्षग्रन्थ के पाठ से पुण्य प्राप्ति तथा ऋषि ऋण निवृत्ति भी हो॥

## क्षमापन

सज्जन विद्वानों से प्रार्थना है कि मैंने नवीन रिसर्च के कोई ग्रन्थ नहीं देखे थे। नाहीं विशेष कुछ सामग्री ही प्राप्त हुई। अपनी तुच्छ बुद्धि के अनुसार यह लिख दिया है। संभव है ठीक न हो। और इसमें भी बुद्धि–दृष्टि और योजकों के दोषों से अशुद्धियें भी हो गई हों। कृपा की दृष्टि से उन्हें शोध लें मुझे भी क्षमाप्रदान पूर्वक सूचित करें जिससे आवृत्त्यन्तर ठीक करके छपाया जावे।

यतः चलन्सुदृष्टथाऽपि पतेत्प्रकृत्या ब्रह्मादया यत्र निदर्शनं स्युः ।
कस्तत्र दोषो मनुजस्य वाच्यस्तज्ज्ञैः समाधेयमतश्च शोध्यम् ॥
श्रीहरिश्शरणं भूयान्निजकारुण्यमात्रतः ।
अन्यथा का गतिर्मादृक्पापानां नरकोद्धृतेः ॥

इति सज्जनविपश्चिदनुचरो रामप्रपन्नशास्त्री

(भू०सा०) बहुत से लोक भाषा टीका चाहते थे उनके वास्ते इस आवृत्ति में भाषा टीका भी साथ लगा दी है । आशा है अब इसका सर्वत्र अधिक आदर होगा ॥

चलते २ विज्ञपुरुषों को भी कहीं न कहीं ठोकरें लग ही जाती हैं जैसा कि ऊपर श्लोक में लिखा ही है अतः सत्पुरुषों से प्रार्थना हैं कि वे क्षमा करें । इति शिवम्

इति भूमिकानुवादकः

## द्वितीयावृत्तिपातनिका

अथ कतिभिः कृतिभिः भूयो भूयो विज्ञप्तोहम् यद्भवदीय—वृत्तरत्नाकरव्याख्यायाः पृथमा संस्कृतिर्निरशेषि । परा प्रारभ्यतां, यतः प्रत्यहमभ्यर्थ्यते जनैर्दलैर्बहुशो बलैरिति निशम्यैतन्मे प्रमोद आत्मनि न सम्भूत् । यदि भवदनुगृह्णन्ति व्याख्यामेतां मे सदयाः सहृदयाः इति । तदनु कैश्चिदभाणि यद्भवदीयमुद्रणाद्यनुयुक्तया रत्नसंग्रहाख्यायाः व्याख्यायाः कानिचिद्रत्नानि निर्गम्य रूपान्तरैर्विपरिणम्यन्ते तन्मुद्रणाय त्वर्यतामिति । इदमप्यवगत्य मम मनसा नाखिद्यत। उत्तमं हि वस्तु समाददते परे। किन्तूचितमासीदेतदेतेषां यदस्माभिरमुकस्थानादात्तमिदमिति लेखनं तद्विरहेण दूये । विदुषामन्तेवासिनां चेयतीमादृतिमवेत्य भूमिकामिमां यथामति, पुनः संकृत्य परिष्कृत्य च सर्वैरुत्तमोत्तमैः साधितं साधनैः,आवृत्तावस्यां केषांचिदाग्रहवचसा हिन्दीभाषा टीकापि सुन्यबध्यत; ययाऽल्प प्रज्ञानामप्यर्थावबोधसौकर्यं संभाव्यते, अत्र च मामकेनोत्तमेनान्तेवासिना पं० परशुराम शास्त्रिणा न्याय्यं साहाय्यं भूरि व्यधायि । प्रायो बहवोंऽशास्तेनैवात्रान्ववादिषत, तं धन्यं ब्रवीमि रञ्जये चाशिषेति । आशासे च साम्प्रतं प्रथमतोपि प्रथिमाऽधिको भविताऽनुग्राहकाणां ग्राहकाणां स्वान्तेष्विति शिवम् ॥

इति संकलयिता सज्जनवशंवदः काव्यतीर्थः **पं०रामप्रपन्नशास्त्री** ज्येष्ठामहाध्यापकः श्रीरघुनाथ–महाविद्यालये **जम्बू ( कश्मीर ) राजधानी** वास्तव्यः ॥

# भूमिका वा प्रशंसापत्रम् ।



रायबहादुर **पं० उदयचन्द्र शर्म** महोदयानाम् ऐम्० ए० उपाधिकानां कश्मीर राज्यान्तर्गत जम्बू [द्विगर्त] प्रदेशीय [गवर्नर] पदवाच्य-राजप्रतिनिधीनाम् ।

JAMMU :

*29th Nov: 1925.*

I have carefully examined the "Ratna Sangraha" commentary on the "Vritta Ratnakara" by Pandit Ram Prapanna Shastri, Kavyatirtha. The commentary is a very great improvement on its predecessors; giving as it does the Sutras by Pingala Muni, and their illustrations from the "Vritta Ratnakra" in one and the same Metre. In the commentary itself again the Explanatory notes have been given in the same Metre. The commentary is a very useful work both for students preparing for University Examinations and for the General Student of Sanskrit Prosody. The book should, in my opinion, be prescribed as a text book. I wish the author all Success in his undertaking, and trust that Sanskrit Scholars will extend their patronage.

UDAY GHAND,

RAI BAHADUR,

*Governor, Jammu Province,*

# विषयावलीसूचीपत्रमिदम् ।

इति विषयावलीसूचीपत्र समाप्तम् ।

# छन्दःसूचीपत्रमिदकम्

**अत्र च केवलं समन्वयितश्लोकाङ्का एव प्रदत्ताः एतदुपरि पिङ्गलसूत्राणि, तत्सर्वप्रकरणोपरि च मूलश्लोका स्थूलाक्षरैर्लिखिता विज्ञेयाः ॥**

**समाप्तं शुभं भवतु**

ॐ श्रीगणेशाय नमः ।

# अथ सटीको वृत्तरत्नाकरः

## प्रारभ्यते ।

सन्मानसे प्रकटहंसकिशोरिकां ताम्
देवीं गिरां सुमुनिपिङ्गलमादिमञ्च ।
निध्याय प्राक्तनकृतीश्च विमृश्य वृत्त-
रत्नाकरं विवृतिभिः सुगमीकरोमि ॥

ग्रन्थकर्त्रा सप्तमे श्लोके गणलक्षणमात्रमुक्तम् अन्यैश्चाऽत्र देवता-फलस्वरूपादीन्यप्येवमुक्तानि तानि च स्पष्टप्रतिपत्तयेऽत्रै (प्रथमे) वोच्यन्ते ॥

मो भूमिस्त्रिगुरुः श्रियं दिशति, यो वृद्धिं जलं चादिलो,
रोऽग्निर्मध्यलघुर्विनाशम,ऽनिलो देशाटनं सोऽन्त्यगः ।
तो व्योमान्तलघुर्धनापहरणं, जोऽर्को रुजं मध्यगो,
भश्चन्द्रो यश उज्ज्वलं मुखगुरु, र्नो नाक आयुस्त्रिलः ॥

श्रीगणनाथ तथा गुरू चरणों का करि ध्यान ।
वृत्तरत्नाकर का करूं भाषा में व्याख्यान ॥

ग्रन्थकर्ता ने सातवें श्लोक में केवल गणों के लक्षण लिखे हैं । और आचार्यों ने स्पष्टरीत्या देवता फल स्वरूप आदि भी लिखे हैं । उन्हें पहले ही लिख देना चाहिये अतः यहां ही लिखते हैं ।

**मो** इति मगण त्रिगुरु होता है इसका भूमि देवता और लक्ष्मी फल है । यगण आदि लघु है जल [वरुण] देवता और वृद्धि फल है । रगण मध्यलघु अग्नि देवता और विनाश फल है । सगण अन्त्यगुरु वायु देवता और देशाटन फल है । तगण अन्त्यलघु आकाश देवता और धननाश फल है । जगण मध्यगुरु सूर्य देवता और रोग फल है । भगण आदिगुरु चन्द्र देवता और उज्ज्वल यश फल है । नगण त्रिलघु नाक [इन्द्र] देवता आयुर्वृद्धि फल है ॥ १ ॥

विशेष स्पष्ट नीचे यन्त्र में देखो :—

| संख्या | गणनाम | रूपम् | देवता | फलम् | मित्रादि | शुभाऽशुभम् |
|---|---|---|---|---|---|---|
| १ | मगणः | ऽ ऽ ऽ | मही | लक्ष्मीः | मित्रम् | शुभम् |
| २ | नगणः | । । । | स्वर्गः | आयुर्वृद्धिः | मित्रम् | शुभम् |
| ३ | भगणः | ऽ । । | शशी | यशः | दासः | शुभम् |
| ४ | यगणः | । ऽ ऽ | जलम् | वृद्धिः | दासः | शुभम् |
| ५ | जगणः | । ऽ । | रविः | रुक् | उदासः | अशुभम् |
| ६ | रगणः | ऽ । ऽ | अग्निः | दाहः | उदासः | अशुभम् |
| ७ | तगणः | ऽ ऽ । | नभः | धननाशः | शत्रुः | अशुभम् |
| ८ | सगणः | । । ऽ | वायुः | विदेशः | शत्रुः | अशुभम् |

**मनौ मित्रे भयौ भृत्यावुदासीनौ जरौ स्मृतौ।**
**तसावरी नीचसंज्ञौ द्वौ द्वावेतौ मनीषिभिः ॥ २ ॥**

इनकी मित्रादि संज्ञाएं भी शास्त्रकारों ने कही हैं—

**मनौ** इति मगण-नगण मित्रसंज्ञक, भगण-यगण भृत्यसंज्ञक, जगण-रगण उदासीन संज्ञक, और तगण सगण शत्रु नीचसंज्ञक, इस रीति से दो दो बुद्धिमानों ने समझने ॥२॥

**एतेषामाद्यद्वितीययोः सन्निवेशे फलमुक्तमाकरे।**

**मित्रान्मित्रं विधत्ते प्रचुरधनमथो मित्रतो भृत्यसंज्ञः।**
**स्थैर्यं, मित्रादुदासो न किमपि च फलं मित्रत शत्रुसंज्ञः॥**
**बन्धोः पीडामथो स्याद्यदि खलु नियतं भृत्यतो मित्रसंज्ञ॥**
**सर्वं कार्यं च, भृत्याद्भृतगण इह चेदायतिं सर्वलोके ॥३॥**

इनके आगे पीछे रखने का क्रम से फल बड़े ग्रन्थ में इस तरह लिखा है।

मित्रादिति मित्र से आगे मित्र हो तो बड़े धन को देता है। मित्र स भृत्य हो तो स्थिरता देता है। मित्र से उदासीन का कुछ फल नहीं। मित्र से शत्रु बन्धुपीड़ा करता है॥ और यदि निश्चय से भृत्य से मित्र हो तो सब काम सिद्ध हो जाते हैं। भृत्य से भृत्य सब लोक में उत्तर काल में अच्छा फल देता है॥३॥

भृत्याच्चेत्स्यादुदासो धनविगमम,ऽथो भृत्यतः शत्रुसंज्ञः।
शोकं कुर्य्या,दुदासाद्व यदि भवति तदा मित्रसंज्ञोऽल्पकार्य्यम्॥
तस्माद्भृत्यः प्रभुत्वं, तत इह सततं स्यादुदासो विनाशम्।
तस्माच्छत्रुः स्ववैरं विविधसुखहरं सर्वसत्कारनाशम्॥ ४॥

भृत्यादिति भृत्य से उदास हो तो धननाश करता है। भृत्य से अरिसंज्ञक शोक करता है। यदि उदासीन से आगे मित्र हो तो अल्प कार्य करता है। उदास से भृत्य प्रभुत्व [हकूमत] देता है। उदास से उदास हो तो सदैव विनाश करता है। उदास से अरि हो तो अपनों से वैर अनेक प्रकार के सुखहरण और सब संपदों का नाश करता है॥ ४॥

शत्रोर्मित्रञ्च शून्यं, यदि भवति ततो भृत्यसंज्ञो गृहिण्या
नाशं तस्मादुदासो धनहरमधिकं दुःखदारिद्र्यशोकम्॥
शत्रोः शत्रुर्भवच्चेदिह खलु नितरां नायकस्यैव नाशं।
देशोद्वासं विधत्ते, कथयति च फलं पिङ्गलो नागराजः॥ ५॥

यदि अरि से मित्र हो कुछ फल नहीं होता। अरि से आगे भृत्य हो तो स्त्रीनाश करता है। अरि से उदास हो बहुत ही धन हरता दुःख गरीबी और शोक देता है। अरि से अरि हो तो नायक [ काव्य में वर्णनीय ] का ही नाश और देश निकाला करता है। यह सब फल पिङ्गल नाम नागराज ने कहा है॥ ५॥

स्पष्ट २ चक्र में देखो--

| मित्रान्मित्रादौ फलम् | | | | | भृत्यान्मित्रादौ फलम् | | | | |
|---|---|---|---|---|---|---|---|---|---|
| मनाभ्यां SSS-III | मनयोः SSS-III | मित्रात् | मित्रे | प्रचुरधनम् | भयाभ्यां SII-ISS | मनयोः SSS-III | भृत्यात् | मित्रे | सर्वकार्यम् |
| SSS-III | भययोः SII-ISS | मित्रात् | भृत्ये | स्थैर्य्यम् | SII-ISS | भययोः SII-ISS | भृत्यात् | भृत्ये | सार्वलौकिकौत्तरकालिकशुभम् |
| SSS-III | जरयोः ISI-SIS | मित्रात् | उदासे | शून्यम् | SII-ISS | जरयोः ISI-SIS | भृत्यात् | उदासे | धननाशः |
| SSS-III | सतयोः IIS-SS | मित्रात् | शत्रौ | बन्धुपीड़ा | SII-ISS | सतयोः IIS-SSI | भृत्यात् | शत्रौ | शोकः |

| उदासान्मित्रादौ फलम्। | | | | | शत्रोर्मित्रादौ फलम्। | | | | |
|---|---|---|---|---|---|---|---|---|---|
| जराभ्यां ISI-SIS | मनयोः SSS-III | उदासात् | मित्रे | अल्पकार्यम् | सताभ्यां IIS-SSI | मनयोः SSS-III | शत्रोः | मित्रे | शून्यम् |
| SI-SIS | भययोः SII-ISS | उदासात् | भृत्ये | प्रभुत्वम् | IIS-SSI | भययोः SII-ISS | शत्रोः | भृत्ये | स्त्रीनाशः |
| ISI-SIS | जरयोः ISI-SIS | उदासात् | उदासे | विनाशः | IIS-SIS | जरयोः ISI-SIS | शत्रोः | उदासे | धनहरणदुःखदरिद्रशोकाः |
| ISI-SIS | सतयोः SSI-SSI | उदासात् | शत्रौ | सर्ववैरंविविधसुखसत्कारनाशः | IIS-SSI | सतयोः IIS SSI | शत्रोः | शत्रौ | नायकनाशः देशोद्वासः |

गणप्रसङ्गेनाऽक्षरशुद्धिरप्यभिधीयते "अक्षरे परिशुद्धे तु। नायको भूतिमृच्छति" इत्युक्तेरक्षरशुद्धेरावश्यकत्वात्॥

अवर्णात् सम्पत्तिर्भवति च मुदिवर्णाद्धनशता-
न्युवर्णादख्यातिः सरभसमृवर्णाद्व वरहितात्॥
तथाह्यचः सौख्यं ङञणरहितादक्षरगणात्।
पदादौ विन्यासाद्व भरवहलपूर्वैर्विरहितात्॥ ६॥ इति भामहः

भरवहलास्तत्पूर्वाणि यान्यक्षराणि तैर्विरहितादित्यर्थः।

गण प्रसंग से अक्षरशुद्धि भी कही जाती है। क्योंकि "अक्षर के सर्वथा शुद्ध होने से नायक ऐश्वर्य पाता है" इस शिष्टवचन से अक्षरशुद्धि बहुत जरूरी है॥

श्लोकपाद का पहला वर्ण अकार हो तो सम्पदा मिलती है। इ वर्ण से सैकड़े धन, उ वर्ण से अप्रसिद्धि, ऋकार के आगे वकार न हो तो काहली, एच् से सुख, ङ ज ण से रहित और भरवहलपूर्वक न हों तो पूर्वोक्त [ऊपर कहे] स्वरों से यह फल होते हैं यदि श्लोक के पहले पद के पूर्व विन्यास किये जावें ॥ ६ ॥ [भामह वचन]

**हल्वर्णानां फलान्युक्तान्याकरे ॥**

**कः खो गो घश्च लक्ष्मीं वितरति वियशोङ,स्तथा चः सुखं छः।**
**प्रीतिं, जो मित्रलाभं, भयमरणकरौ झञौ ट्ठौ खेददुःखे ॥**
**डः शोभां ढो विशोभां भ्रमणमथच ण,स्तस्तु खं, थस्तु युद्धम् ॥**
**दो धः सौख्यं, मुदं नः, सुखभयमरणक्लेशदुःखं पवर्गः ॥७॥**

ऐसे हल् वर्णों का फल भी बड़े २ ग्रन्थों में लिखा है

क इति क-ख-ग-घ हों तो लक्ष्मी को देते हैं, ङ निन्दा, ऐसे च सुख, छ प्रीति, ज मित्रलाभ, झ भय, ञ मरण, ट खेद [तकलीफ], ठ दुःख, ड शोभा, ढ अशोभा, ण भ्रमण, त कुछ फल नहीं, थ युद्ध, द-ध सुख, न आनन्द, प सुख, फ भय, ब मरण, भ क्लेश, म दुःख, ॥ ७ ॥

**यो लक्ष्मीं रस्तु दाहं, व्यसनमथलवौ, शः सुखं, षस्तु खेदं ।**
**सः सौख्यं, हस्तु खेदं विलयमपि च ळः, क्षः समृद्धिं करोति।**
**संयुक्तं चेह न स्यात् सुखभरणपटुर्वर्णविन्यासयोगः ।**
**पद्यादौ, गद्यवक्त्रे, वचसि च सकले प्राकृतादौ समोऽयम् ॥८॥**

**इति भामाहः ।**

य इति य लक्ष्मी, र दाह, ल-व व्यसन [ऐब], श सुख, ष खेद, स सुख, ह खेद, ळ विलय [सर्वनाश], और क्ष संपदा करता है। यदि संयुक्त न हो तो यह वर्ण विन्यास [स्थिति] का योग सुख के धारण करने में खूब समर्थ होता है। श्लोक तथा गद्य के आदि में और सब वचन प्राकृतादिओं में यह फल बराबर है ॥ ८ ॥ [भामह का कथन]

एतेषां फलाधारनिरूपणमप्याकरे।

**नायको वर्ण्यते यत्र फलं तस्य समादिशेत्।**
**अन्यथा तु कृते काव्ये कवेर्दोषावहं फलम् ॥ ९ ॥**

इन फलों के पाने वाला भी आकर में निर्णय किया है

नायक इति जिस काव्य में नायक वर्णन किया गया हो वहां उसको फल कहे। नायक विना काव्य बनाया हो तो फल कवि को दोषी बनाता है।

तस्य प्रतिप्रसवोऽप्युक्तः।

**देवता वर्ण्यते यत्र क्वापि काव्ये कवीश्वरैः।**
**मित्राऽमित्रविचारो वा न तत्र फलकल्पना ॥ १० ॥**
**देवतावाचकाः शब्दा ये च भद्रादिवाचकाः।**
**ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥ ११ ॥**

इसका बाधक भी लिखा है

देवतेति जहां कहीं भी काव्य में उत्तम कवियों ने देवता का वर्णन किया हो वहां मित्र अरि विचार और फल कल्पना नहीं करनी। जो शब्द देवता वाचक और मङ्गलादिवाचक हों वे सब लिखने से अथवा गणदोष से निन्दा करने योग्य नहीं होते॥

इति शुभम्।



# अथ मूलम् ।

सुखसन्तानसिद्ध्यर्थं नत्वा ब्रह्माच्युतार्चितम् ।
गौरीविनायकोपेतं शङ्करं लोकशंकरम् ॥ १ ॥

प्रारिप्सितग्रन्थपरिसमाप्त्यर्थं कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति, सुखेति-ब्रह्मा च अच्युतश्च ताभ्यां विधात्रा विष्णुना च अर्चितं पूजितम् ॥ अपरे तु अकारं प्रश्लिष्य अविद्यमानौ ब्रह्माच्युतौ येषु ते देवदानवमनुजादयः अब्रह्माच्युतास्तैरर्चितः स तम् अब्रह्माच्युतार्चितं तयोर्गुरुत्वात् तद्भिन्नसकललोकार्चितमित्यर्थः, इति व्याचक्षते । गौरी पार्वती विनायको गणेशस्ताभ्याम् उपेतं युक्तं लोकानां जगतां शं सुखं करोतीति तादृशम् शंकरं शिवं सुखमात्यन्तिकम् मोक्षलक्षणं सन्तानः पुत्रपौत्रादिः सिद्धयोऽणिमादयस्तदर्थं नत्वा तेन केदारेणेदं वृत्त-रत्नाकरं नाम छन्दः क्रियते इति तृतीयेनान्वयः ॥ १ ॥

अन्वयः-

सुखसन्तानसिद्ध्यर्थं (अ) ब्रह्माच्युतार्चितं गौरीविनायकोपेतं लोकशंकरं शंकरं नत्वा, तेन केदारेण कृतरत्नाकरं नाम छन्दः "क्रियते" इति तृतीयेनान्वयः ।

भाषार्थः —

सुखेति—ब्रह्मा तथा विष्णु भगवान् जी से पूजित अथवा नत्वा (ऽ) ब्रह्माच्युतार्चितम्, इसमें अकार का प्रश्लेष कर ब्रह्मा तथा विष्णु के जगत्पूज्य होने से उन (ब्रह्मा तथा विष्णु) से अतिरिक्त समस्त देवता दानव तथा मनुष्यों से पूजित पार्वती तथा गणेश से ( युक्त ) सेवित समस्त संसार के सुख तथा शान्तिकारक भगवान् शङ्कर को प्रणाम कर मोक्षात्मक सुख पुत्रपौत्रादि सन्तान तथा अणिमादि सिद्धियों की प्राप्ति के लिये ( उस केदार नामक ने वृत्तरत्नाकर नामक छन्दःशास्त्र के ग्रन्थ का निर्माण किया जाता है इतना तृतीय श्लोक से अन्वित होता है ) ॥१॥

वेदार्थशैवशास्त्रज्ञः पव्येकोऽभूद्द्विजोत्तमः ॥
तस्य पुत्रोऽस्ति केदारः शिवपादार्चने रतः ॥ २ ॥

वेदेति वेदार्थश्च शैवशास्त्राणि रुद्रयामलादीनि च तेषां (जानातीति)ज्ञः वेदार्थशैवशास्त्रज्ञः (आतोऽनुपसर्गे कः) एवंविधः पव्येको नाम द्विजोत्तमो ब्राह्मणश्रेष्ठोऽभूज्जातस्तस्य पुत्रः शिवपादार्चने शिवस्य ईश्वरस्य पादौ शिवपादौ तयोरर्चनं पूजनं तस्मिन् रत आसक्तः केदारोऽस्ति। अत्र द्विजोत्तमग्रहणेनास्य ग्रन्थस्य श्रवणे ब्राह्मणकर्तृत्वेन दोषाभावः सूचितः ॥ २ ॥

अन्वयः—

वेदार्थशैवशास्त्रज्ञः पव्येको नाम द्विजोत्तमोऽभूत, तस्य पुत्रः शिवपादार्चने रतः केदारो ऽस्ति ॥२॥

भावार्थः—

वेदों के अर्थ तथा रुद्रयामलादिक शैवशास्त्रों का वेत्ता ( जानने वाला ) पव्येक नामक एक ब्राह्मण श्रेष्ठ था, उस पव्येक का पुत्र, शिव अर्थात् ईश्वर के चरणों की पूजा में निरत ( लगा हुवा ) केदार नामक है। ( वेदार्थेत्यादि विशेषण से अपना वंशपरम्परा का पाण्डित्य तथा द्विजोत्तमविशेषण से ब्राह्मणश्रेष्ठता तथा पादार्चने रतः विशेषण से अपनी निस्पृहता तथा केवल परोपकार बोधन करते हुए ग्रन्थकार इस ग्रन्थ की निर्दोषता सूचित करते हैं ) ॥२॥

तेनेदं क्रियते छन्दो लक्ष्यलक्षणसंयुतम्।
वृत्तरत्नाकरं नाम बालानां सुखबुद्धये ॥ ३ ॥

तेनेति तेन प्रकृतेन केदारेण लक्ष्यमुदाहरणमेव लक्षणं छन्दोनियमस्तेन संयुतं वृत्तानि श्रीप्रभृतीन्येव रत्नानि तेषामाकरः खनिः समूहो यत्र तत् इदं वृत्तरत्नाकरं नाम छन्दः छन्दोग्रन्थ इत्यर्थः यथा महाभाष्ये "सूत्रं व्याकरण"मिति। बालानामधीतशब्दशास्त्रादीनामनधीतछन्दःशास्त्राणां सुखबुद्धये सुखेनाऽनायासेनावबोधाय क्रियते

निर्मीयते। लक्ष्येत्यादिना केवललक्ष्येभ्यः काव्यादिभ्यः केवललक्षणेभ्यः सूत्रादिभ्यः पृथग्लक्ष्यलक्षणेभ्यः सूत्रवृत्तिग्रन्थेभ्यश्चास्याऽगतार्थता सूचिता। अत एवाह बालानामित्यादि। एतेनानुबन्धचतुष्टयमप्युक्तम् ॥ ३ ॥ त्रिभिर्विशेषकम् ॥

अन्वयः—

तेन इदं लक्ष्यलक्षणसंयुतं वृत्तरत्नाकरं नाम छन्दः बालानां सुखबुद्धये क्रियते ॥३॥

भाषार्थः—

तेनेति--वह केदार नामक में जो लक्ष्य है वही है लक्षण जिसमें ऐसे लक्ष्यात्मक लक्षणयुक्त, वृत्तरूप रत्नों के समुद्रस्वरूप वृत्तरत्नाकर नामक छन्दोग्रन्थ को बालकों के सुख से छन्दोज्ञान के लिये निर्माण करता हूं ( बनाता हूं ) ॥३॥

पिङ्गलादिभिराचार्यैर्यदुक्तं लौकिकं द्विधा।
मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते ॥ ४ ॥

पिङ्गलेति यत्पिङ्गलादिभिः पिङ्गलः एतच्छास्त्रसूत्रकर्ता आदिपदेन भाष्यकारादयस्तैः आचार्यैर्लौकिकं लोके भवं न पुनर्वैदिकं काव्यादिष्वनुपयोगात् एतेन वैदिकनिरासस्तैस्तस्याप्युक्तेः। मात्रावर्णविभेदेन इदं मात्राछन्द इदं वर्णछन्द इति विशेषेण द्विधा द्विप्रकारम् उक्तं तच्छन्द इहास्मिन्ग्रन्थे कथ्यते इत्यभिधेयमुक्तमत्र ॥ ४ ॥

---

१ काव्यादियों में केवल लक्ष्य ही हैं, सूत्रग्रन्थ में केवल लक्षण ही हैं, तथा वृत्तिग्रन्थों में लक्षण भिन्न हैं इसमें जो लक्ष्य है वही लक्षण है अतः इसकी उन सब ग्रन्थों से अधिकता प्रतीत होती है अतः जो ऐसा कहते हैं कि इतने छन्दोग्रन्थ होने पर इस ग्रन्थ का निर्माण व्यर्थ है, उनकी उक्ति इससे खण्डितप्राय है।

अन्वयः—

यत्पिङ्गलादिभिः[1] आचार्यैः लौकिकं[2] मात्रावर्णविभेदेन द्विधा उक्तम् तत् छन्दः इह कथ्यते ॥४॥

भाषार्थः—

पिङ्गलेति छन्दःशास्त्र के सूत्रकार पिङ्गलादिक आचार्यों ने ( आदि पद से भाष्यकारादियों ने ) जो लौकिक अर्थात् लोक (काव्यादियों) में प्रचलित छन्द मात्राछन्द तथा वर्णछन्द ऐसे भेदों से दो प्रकार के कहे हैं उन लौकिक छन्दों को मैं ( केदार ) इस वृत्तरत्नाकर नामक ग्रन्थ में वर्णित करता हूं ॥४॥

षडध्यायनिबद्धस्य छन्दसोऽस्य परिस्फुटम् ।
प्रमाणमपि विज्ञेयं षट्त्रिंशदधिकं शतम् ॥ ५ ॥

षडिति षट् च तेऽध्यायाः षडध्यायास्तैर्निबद्धं तत् तस्य अस्य छन्दसः छन्दोग्रन्थस्य प्रमाणं मानं परिच्छेदः इति यावत् अपि षट्त्रिंशत्संख्ययाधिकं शतं परिस्फुटं परि समन्तात्प्रकटं विज्ञेयं ज्ञातव्यम्. द्वात्रिंशद् (३२) वर्णात्मकानुष्टुप्छन्दसां श्लोकानां षट्-त्रिंशदधिकं शतं (१३६) प्रमाणमत्र बोध्यम् लोके तस्यैव ग्रन्थगण· नायां प्रसिद्धेः ॥ ५ ॥

अन्वयः—

षडध्यायनिबद्धस्य अस्य छन्दसः प्रमाणमपि षट्त्रिंशदधिकं शतं परिस्फुटं विज्ञेयम् ॥५॥

---

१ पिङ्गलादि आचार्यों का प्रतिपादन करने से इस ग्रन्थ की पुराने आचार्यों से अनुगतार्थता सूचित होती है तथा इससे स्वकपोलकल्पनाभाव ध्वनित करके इस ग्रन्थ की मान्यता तथा श्रेष्ठता को प्रतिपादित करता है ।

२ "लौकिकं" इस विशेषण से सूत्रकार भाष्यकारादियों ने जो गायत्र्यादि वैदिकछन्द वर्णित किये हैं उनका इसमें वर्णनाभाव बोधित होता है क्योंकि लोक ( काव्यादियों ) में उनके उपयोग का सर्वथा अभाव है ।

भाषार्थः—

**षडिति** इस छः अध्यायों से बने हुए वृत्तरत्नाकर नामक ग्रन्थ का स्पष्ट २ सम्पूर्ण प्रमाण भी १३६ एक सौ छत्तीस अनुष्टुप् श्लोकगणना से जानना। लोक ( पुराणादियों में ) ३२ वर्णात्मक अनुष्टुप्छन्द से ही ग्रन्थगणना प्रसिद्ध है अतः इसमें भी अनुष्टुप् छन्द से गणना योग्य समझ कर १३६ श्लोकसंख्या परिगणित की है ॥ ५ ॥

वर्णगणनाह

**म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः।**
**समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥ ६ ॥**

**म्येति समस्तं वाङ्मयं वाग्रूपं शास्त्रं म्यरस्तजभ्नगैः-मगण-यगण-रगण-सगण-तगण-जगण-भगण-नगण--गुरुभिर्लान्तैर्लघुयुक्तैः एभिः दशभिरक्षरैर्लगगणाष्टकघटकैः संज्ञारूपैः वर्णैः त्रैलोक्यं त्रिभुवनं विष्णुना नारायणेनेव व्याप्तम् ॥ ६ ॥**

अन्वयः—

**समस्तं वाङ्मयं म्यरस्तजभ्नगैर्लान्तैः एभिः दशभिः अक्षरैः त्रैलोक्यं विष्णुना इव व्याप्तम् ॥६॥**

भाषार्थः—

**म्येति** जैसे समस्त त्रिभुवन विश्वव्यापी विष्णु से व्याप्त है ऐसे ही समस्त शास्त्र मगण-यगण-रगण-सगण-तगण-जगण-भगण-नगण-गुरु और लघु इन दश अक्षरों से व्याप्त है। अर्थात् सर्वत्र शास्त्र में इन्हीं का विस्तार है इनसे एक अक्षरमात्र भी भिन्न नहीं होसकता ॥६॥

**अथ पिङ्गलमुनिसूत्राणि क्रमेण मगणादिज्ञानाय लिख्यन्ते।**

**"धीश्रीस्त्री म्" १।१ "वरसा य्" १।२ "कागुहा र्"**

ऽ ऽ ऽ ।ऽ ऽ ऽ।ऽ

---

१ ( टि० ) ईदृशगुरुलघुवर्णत्रिकाणाम—यकारादयः संज्ञा बोद्धव्या इत्यर्थः यथा **'धीश्रीस्त्री'** इति गुरुवर्णत्रयस्य मगण इति संज्ञा। **'नहस'** इत्यादि लघुत्रिकस्य च नगण इत्येवं सर्वत्र ज्ञेयम्।

१।३, "वसुधा स्" १।४ "सातेक त्" १।५ "कदास ज्"
।।ऽ ऽऽ। ।ऽ।
१।६ "किंवद भ्" १।७ "नहस न्" १।८ "गृ ल्" १।९
ऽ।। ।।। ऽ।

इदानीं गणाष्टकलक्षणान्याह मूलग्रन्थकारः--

तथाच

सर्वगुर्मो मुखान्तलौ यरावन्तगलौ सतौ ।

ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः॥ ७ ।

सर्वेति सर्वे त्रयः गवो गुरवो यत्र स सर्वगुः मः मगणः । नामैकदेशे नामग्रहणमिति न्यायेन गुशब्दो गुरुवाची, लो लघुवाची एवं ग्लौ। घिटिवत्स्वसङ्केतेन वा बोधः एवं सर्वत्र। मुखे आदौ अन्तर्मध्ये च लो लघुर्ययोस्तौ मुखान्तलौ यरौ यगण-रगणौ आदिलघुर्यगणः मध्यलघुः रगण इत्यर्थः। अन्ते अवसाने गुरुर्लघुश्च ययोस्तौ अन्तगलौ सतौ सगण-तगणौ अन्तगुरुः सगणः अन्तलघुस्तगण इत्यर्थः। गुरुर्मध्य आद्यश्च ययोस्तौ ग्मध्याद्यौ ज्भौ जगण-भगणौ मध्यगुरुर्जगणः आदिगुरुर्भगणः। त्रयो ला लघवो यत्र सः त्रिलो नः नगणः एवम् अत्र अस्मिन् छन्दोग्रन्थे त्रिकास्त्र्यवयवा अष्टौ गणा भवन्ति। मात्रा-वर्णान्यतरचतुष्कत्रिकसमूहो गणः। यथा—

| मगणः | यगणः | रगणः | सगणः | तगणः | जगणः | भगणः | नगणः | गुरुः | लघुः |
|---|---|---|---|---|---|---|---|---|---|
| ऽऽऽ | ।ऽऽ | ऽ।ऽ | ।।ऽ | ऽऽ। | ।ऽ। | ऽ।। | ।।। | ऽ | । |

अन्वयः--

सर्वगुः[2] मः, मुखान्तलौ यरौ, अन्तगलौ सतौ, ग्मध्याद्यौ ज्भौ, त्रिलो नः, (एवम्)-अत्र त्रिका अष्टौ गणा भवन्ति ॥ ७ ॥

---

१ 'गृ' इत्येतादृशस्य वर्णस्य ल् (लघु) संज्ञेति च दिक्।

२ ' नामैकदेशे नामग्रहणम्, इस न्याय से गुशब्द गुरुवाची तथा लशब्द लघुवाची हो सकता है, ऐसे ही ग्-ल् शब्द भी इसी न्याय से गुरुलघुवाचक हो सकते हैं, अथवा व्याकरण में घि-टि- संज्ञा की तरह इसमें भी स्वशास्त्र सङ्केतसिद्ध बोध जानना।

**सर्वेति**—जिसमें सम्पूर्ण अर्थात् तीनों गुरु हों उसे मगण कहते हैं, मुख अर्थात् आदि में जिसके लघु हो उसको यगण, तथा जिसके मध्य में लघु हो उसे रगण जानना, अन्त में जिस के गुरु हो उसको सगण तथा जिस के अन्त में लघु हो उसको तगण कहते हैं, जिस के मध्य में गुरु हो उसे जगण कहते हैं तथा जिस के आदि में गुरु हो उसे भगण कहते हैं, जिस में तीनों वर्ण लघु हों वह नगण होता है। ऐसे इस शास्त्र में त्रिक अर्थात् तीन २ अवयवों वाले (मात्रा अथवा वर्ण समूह का नाम) गण (लक्षण) हैं ॥७॥

॥ अथ मात्रागणानाह ॥

## लः[1] समुद्राः गणः ४।१२ गौ गन्तमध्यादि लश्च४।१३

ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः ।
गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः ॥ ८ ॥

**ज्ञेया** इति चतुष्कलाः चतुर्मात्राः चतुर्लघूपेताः पञ्चमो गणश्चतुर्लघुः चत्वारो लघवो यस्मिन् स तेनोपेताः युक्ताः सर्वान्तमध्यादिगुरवः सर्वश्च मध्यश्च अन्तश्च आदिश्च ते गुरवो येषु ते अत्र "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते" इति न्यायेन गुरुशब्दस्य प्रत्येकं संबन्धः । आर्यादिषु मात्रावृत्तेषु संस्थिताः पञ्च गणाः ज्ञेयाः बोध्याः ।८ गौ गन्तमध्यादि लश्च" 'लः समुद्रा गण." इति पिङ्गलमुनिः ।

| सर्वगुरुः | अन्तगुरुः | मध्यगुरुः | आदिगुरुः | चतुर्लघुः |
|---|---|---|---|---|
| SS | IIS | ISI | SII | IIII |

अन्वयः--

चतुष्कलाः चतुर्लघूपेताः सर्वान्तमध्यादिगुरवः आर्यादिषु संस्थिताः पञ्च गणा ज्ञेयाः ॥ ८ ॥

(टि) १ लः मात्राः समुद्राः चत्वारः गण इत्युच्यते मात्रावृत्तेष्विति ज्ञेयम् । तद्विन्यासमाह गावित्यादि गौ गुरुद्वयमेको गणः । गन्तो गुर्वन्तो द्वितीयः । मध्यगुरुस्तृतीयः । आदिगुरुश्चतुर्थः । लः सर्वे (चत्वारः) तत्स्वरूपः पञ्चमः इत्यर्थः ॥

भाषार्थः

**ज्ञेया** इति चार २ मात्राओं वाले तथा चतुर्लघुस्वरूप पञ्चम गण से युक्त, क्रम से सम्पूर्णगुरुस्वरूप, अन्तगुरुस्वरूप, मध्यगुरुस्वरूप, तथा आदिगुरुस्वरूप आर्यादिक मात्रा वृत्तों में वर्तमान पांच गण जानने ( होते हैं ) अर्थात् आर्यादिक मात्रावृत्तों में चार २ मात्राओं वाले पांच गण होते हैं जो क्रम से सर्वगुरु-अन्तगुरु-मध्यगुरु-आदिगुरु तथा चतुर्लघुस्वरूप होते हैं ॥ ८ ॥

गुरुलघुलक्षणमाह

**गन्ते १।१० ध्रादिपरः १।११ हे १।१२**

**सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः ।**

**वा पादान्ते त्वसौ, ग्वक्रो ज्ञेयोऽन्यो मात्रिको लृजुः । ९ ।**

सेति सानुस्वारः सह अनुस्वारेण वर्तत इति सानुस्वारः विसर्गान्तः विसर्गः अन्ते यस्य सः । दीर्घः द्विमात्रः युक्तपरः युक्तं संयुक्ताक्षरं परं यस्मात् स युक्तपरः संयोगे परभूते यः पूर्व इति यावत्, एतादृशो वर्णः 'ग्" गुरुर्भवति । व्यञ्जनजिह्वामूलीयोपध्मानीयानामप्युपलक्षणमिदम् तेन तदन्तोपि गुरुर्भवति । लघुश्च वा विकल्पेन पादान्ते गुरुर्भवति ।

तदुक्तं पिङ्गलमुनिना "गन्ते" १।१० ॥ असौ (ग्) गुरुस्तु पुनः प्रस्तारे वक्रः कुटिलरेखाकारः (ऽ) ज्ञेयः अन्यः अस्माद्विपरीतो ल् लघुः ( एक ) मात्रिकः ज्ञेयः । तदुक्तं पैङ्गले 'गृ लृ" इति । स च प्रस्तारे ऋजुः सरलरेखाकारो (।) ज्ञेयः बोध्यः । अत्र पिङ्गलमुनिः गन्ते ध्रादिपरः, हे, ॥ ९ ॥

---

१ "लृ"—इत्यनुवर्त्य पादान्ते लघुः ग् गुरुर्भवतीति तदर्थः। ध्र इति व्यञ्जन संयोगोपलक्षणं ध्र आदिर्येषां ते ध्रादयः। आदिपदेन विसर्जनीयानुस्वारजिह्वामूलीयोपध्मानीयानां ग्रहणं ते परे यस्मात् स ध्रादिपरः लघुः गुरुर्भवतीत्यर्थः । हे इतीदृशो द्विमात्रश्च गुरुरित्यर्थः ।

गुरुः—लघुः—
(ऽ) (।)

अन्वयः

सानुस्वारः विसर्गान्तः दीर्घः यश्च युक्तपरः स ग् (गुरुः) भवति इति शेषः, ल् (लघुश्च) पादान्ते वा गुरुर्भवति। असौ वक्रो ज्ञेयः, अन्यो ल् मात्रिकः (प्रस्तारे) ऋजुः ज्ञेयः इति ॥९॥

भाषार्थः

सेति जो अनुस्वार से युक्त हो, जिस के अन्त में विसर्ग हों, जो दीर्घ हो तथा जिस से परे संयुक्त अक्षर हो उसे गुरु कहते हैं। तथा पदान्त में वर्तमान लघु भी विकल्प से गुरु होता है। उस गुरु का प्रस्तार में वक्र अर्थात् (टेढा) (ऽ) ऐसा चिन्ह जानना। तथा गुरु के अतिरिक्त लघु एकमात्रा वाला होता है उसका प्रस्तार में सरल रेखाकार (।) ऐसा चिन्ह जानना।

अस्य प्रतिप्रसवमाह

प्रहे वा॑ ॥ पि० सू०

पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः।
पुरःस्थितेन तेन स्याल्लघुतापि क्वचिद्गुरोः ॥१०॥

पादादाविति इह छन्दःशास्त्रे पादादौ वर्णस्य संयोगः वर्णान्तरेणेति भावः क्रमसंज्ञकः आचार्यैरुक्त इति शेषः तेन पादादिस्थवर्ण संयोगेन पुरःस्थितेन अग्रेभवेन क्वचिद् इष्टस्थले गुरोरपि लघुता-स्यात्। "वा पादान्ते" इत्यत्र "गन्ते" इति मुनिसूत्रे "गृ ल्" इत्यतोऽनुवृत्तिबलानुसारेण लघोर्गुरुत्वं पादान्ते भवतीत्युक्तम्। इह तु गुरोर्लघुत्वमिनि न पौनरुक्त्यम् "प्रहे वेति" पिङ्गलमुनिः। इदञ्च

(टि०) १ सांप्रतं मुद्रितप्रचलितपुस्तके एतन्न दृश्यते नारायणेन तूद्धृतं पिङ्गलनाम्नेति ज्ञायते यत् पैङ्गले प्रकरणान्तरं त्रुटितम्॥

प्रायः संयोगमात्रस्योपलक्षणमिति व्याचक्षते विद्वांसः तेन प्रह्ववर्णोपलक्षितसंयोगमात्रे परे पूर्वस्य वा गुरुत्वमिति विकल्पः इष्टस्थले सिद्ध्यति ॥ १० ॥

यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् ॥

नच्छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः॥ इति च मञ्जर्याम्।

अन्वयः

इह पादादौ वर्णस्य (वर्णान्तरेण) संयोगः क्रमसंज्ञकः ज्ञेयः । तेन पुरःस्थितेन क्वचित् गुरोरपि लघुता स्यात् ॥१०॥

भाषार्थः

पादादाविति पाद की आदि में जो वर्ण का वर्णान्तर के साथ संयोग हो उसे छन्दः शास्त्र में 'क्रम' कहते हैं। क्रमसंज्ञक वर्णसंयोग के परे होने पर पहले गुरु को भी इस छन्दः शास्त्र में कहीं २ इष्टस्थल में लघुता हो जाती है। अर्थात् यद्यपि संयुक्तवर्ण के परे होने पर पूर्व में वर्तमान लघु को भी पूर्व श्लोक में गुरुता होना बतलाया है तथापि कहीं इष्टस्थल पर यहां उसके गुरु होने से कार्य सिद्धि न हो सके तो वहां उसे लघु मान लेना युक्त है। जिसका उदाहरण अभी अग्रिम श्लोक में बतलाया जावेगा ॥१०॥

इदमस्योदाहरणम्—

तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि।
अल्पव्ययेन सुन्दरि! ग्राम्यजनो मिष्टमश्नाति ॥ ११ ॥

क्रमस्योदाहरणं दर्शयति-तरुणमिति हे सुन्दरि! ग्राम्यजनः तरुणमभिनवं सर्षपशाकं तत्पुष्पनालं पिच्छिलानि फेनयुक्तानि दधीनि चेत्येवम् अल्पव्ययेन स्तोकद्रव्यविगमेन मिष्टं मधुरमश्नाति भुङ्क्ते अत्रार्यायां "ग्रा" इत्येतस्मिन् पादादिस्थिते सुन्दरीत्यत्रत्य 'री' वर्णस्य युक्तपरत्वात् यदि गुरुत्वं क्रियते तदा पञ्चमात्रस्तृतीयो गणो भवति।

चतुर्मात्रास्तु गणाः आर्यायाः कर्तव्याः तस्माच्छन्दःशुद्धिकरणाय क्वचिद्गुरोरपि लघुत्वं भवतीति प्रतिज्ञातम् ॥ ११ ॥

अन्वयः

हे सुन्दरि ! ग्राम्यजनः तरुणं सर्षपशाकं नवौदनं पिच्छिलानि दधीनि चेत्येवं अल्पव्ययेन मिष्टमश्नाति ॥११॥

भाषार्थः—

तरुणमिति—हे सुन्दरि ! ग्राम में रहने वाले पुरुष नूतन २ सरसों की गंदलों का शाक, नवीन २ भात, तथा पिच्छिल अर्थात मालाई वाले दधि ( दही ) इत्यादिक सुन्दर मीठे २ पदार्थ अल्पव्यय मामूली ही खर्च से खा सकते हैं ।

इस श्लोक में आर्या छन्द है । आर्या में पांचों गण चतुर्मात्रिक ही होते उसके अनुसार इस आर्या में भी उत्तरार्द्ध का तीसरा गण चतुर्मात्रिक ही होना चाहिए था, परन्तु संयुक्त वर्ण परे होने पर पूर्व लघु गुरु हो जाता है ऐसे नवम श्लोक के वर्णनानुसार 'ग्रा' इस संयुक्तवर्ण से पूर्व में वर्तमान 'रि' वर्ण गुरु होना चाहिए था । परन्तु उसके गुरु होने से आर्या का पांचवां गण पञ्चमात्रिक हो जावेगा इससे अनिष्टापत्ति है, अतः दशम श्लोक में वर्णन किया है कि पाद की आदि में स्थित क्रनामक संयोग परे होने पर पूर्व में वर्तमान गुरु को भी कहीं इष्टस्थल में लघुता हो जाती है । अतः पादादि में वर्तमान संयुक्त 'ग्रा' इस से पूर्व वर्तमान 'रि' गुरु भी लघु हो गया, इसमें आर्या का पञ्चमगण चतुर्मात्रिक होने पर कोई अनिष्टापत्ति नहीं है परन्तु यह कार्य वहीं पर होता है । जहां इसके बिना अनिष्ट निवारण न हो सके । जहां पर अन्य विधि से भी अनिष्टनिवारण हो सके वहां पर इस विधि का आश्रयण युक्त नहीं है । इसी लिये दशम श्लोक में क्वचित् पद दिया है ॥११॥

अथ संख्यादिसंज्ञा आह—

**अष्टौ वसवः १।१५ पादश्चतुर्भागः ४।१०**

---

(टि) १ एतच्चाध उक्तसंख्यासंज्ञोपलक्षणम् । २ चतुर्भागः चतुर्थांश इत्यर्थः एतत्समेषु, अन्येष्वाह यथेति यस्य वृत्तस्य यादृशैःपादैर्न्यूनाक्षरैरधिकाक्षरैर्वा वृत्तं समाप्यते तस्य तस्य तादृशा एव पादा ग्रहीतव्या इत्यर्थः ॥ विच्छेदस्य जिह्वाविरामस्य यतिरिति संज्ञा ज्ञेया॥

यथावृत्तसमाप्तिर्वा ४।११ यतिर्विच्छेदः ६।१।

अब्धिभूतरसादीनां ज्ञेया संज्ञाऽत्र लोकतः।

ज्ञेयः पादश्चतुर्थोंऽशो यतिर्विच्छेदसंज्ञिका॥१२॥

अब्धीति अत्रास्मिन् छन्दःशास्त्रे अब्धयः समुद्राश्चत्वारः (४) भूतानि पञ्च महाभूतानि (५) रसाः षट् (६) आदिशब्दग्रहणेन अश्वाः पर्वताः मुनयश्च सप्त (७) वसवश्च अष्टौ (८) ग्रहाः रन्ध्राणि च नव (९) दिशो दश (१०) रुद्राः एकादश (११) सूर्याः द्वादश (१२) विश्वेदेवाः त्रयोदश (१३) भुवनानि चतुर्दश (१४) इत्यादयो गृह्यन्ते। एतेषां संज्ञा (जातावेकवचनं) लोकतः लोकः शास्त्रान्तराणि अथवा लोक्यते ज्ञायते शब्दार्थनिबन्धोऽस्मिन्निति लोकः व्यवहारस्ततः इत्यर्थः ज्ञेया अवगन्तव्या। "अष्टौ वसव इति" १।१५ एतच्चोपर्युक्तस्योपलक्षणं ज्ञेयम्। चतुर्थः अंशः पद्यस्य पादो ज्ञेयः 'पादश्चतुर्भागः' ४।१० 'यथावृत्तसमाप्तिर्वा' ४।११ इति तु पिङ्गलमुनिः यतिः विरतिश्च विच्छेदसंज्ञिका ज्ञेया॥

यतिर्जिह्वेष्टविश्रामस्थानं सद्भिर्निगद्यते।
सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया॥ १॥
क्वचिच्छन्दस्यास्ते यतिरभिहिता पूर्वकृतिभिः
पदान्ते साशोभां व्रजति पदमध्ये त्यजति च॥
पुनस्तत्रैवासौ स्वरविहितसन्धिः श्रयति तां
यथा कृष्णः पुष्णात्वतुलमहिमा मां करुणया॥ २॥ इति गङ्गादासः
श्वेतमाण्डव्यमुख्यास्तु नेच्छन्ति मुनयो यतिम्॥
इत्याह भट्टः स्वग्रन्थे गुरुर्मे पुरुषोत्तमः॥ ३॥

इति च मञ्जरीकारः तत्र च बहुमहाकव्युदाहरणैर्मण्डितमेतत् "यतिर्विच्छेदः" ६।१ इति पिङ्गलसूत्रम्॥ १२॥

अन्वयः—

अत्र अब्धिभूतरसादीनां संज्ञा लोकतः ज्ञेया चतुर्थः अंशः पादः ज्ञेयः यतिः विच्छेद संज्ञिका (ज्ञेया)।

भाषार्थः—

अब्धीति—इस छन्दःशास्त्र में अब्धि समुद्र चार (४) भूत अर्थात् महाभूत (५) रस छः (६) तथा आदि पद से युग चार (४) वेद (४) बाण पांच (५) ऋतु अङ्ग (६) मुनि सात (७) वसु आठ (८) ग्रह नौ (९) दिशा दश (१०) रुद्र ग्यारह (११ सूर्य बारह (१२) विश्वेदेवा तेरह (१३) भुवन चौदह (१४) तथा चन्द्र (१) नेत्र (२) अग्नि तीन (३) इत्यादिक संज्ञाएं लोक अर्थात अन्य शास्त्रों से अथवा लौकिक व्यवहार से जान लेनीं । श्लोक के चतुर्थ भाग को पाद कहते हैं। विच्छेद अर्थात् विरामसंज्ञक को यति कहते हैं ॥१२॥

## वृत्तम् ५।१ सममर्द्धसमं विषमं च ५।२

युक्समं विषमं चायुक्स्थानं सद्भिर्निगद्यते ।

सममर्द्धसमं वृत्तं विषमं च तथा परम् ॥१३॥

युगिति सद्भिः विद्वद्भिः समं स्थानं द्वितीय–चतुर्थादि युक् निगद्यते विषमं स्थानं प्रथम–तृतीयादि च अयुक् निगद्यते । येन अनोज–युग्मादि समस्य संज्ञा, ओजा–ऽयुग्मादि च विषमस्येति ज्ञेयम् । किञ्च समम् अर्धसमं तथा परम् अन्यत् विषममित्येवं त्रिविधं वृत्तं ज्ञेयम् । अत्र "वृत्तम्" ५।१ इत्यधिकृत्याऽऽशास्त्रसमाप्ति, 'सममर्धसमं विषमं च" ५।२ इति पि० सू० ॥ १३ ॥

अन्वयः—

सद्भिः समं स्थानं युक् निगद्यते; विषमं स्थानं च अयुक् निगद्यते । तथा समम् अर्द्धसमं तथा परं विषममिति त्रिविधं वृत्तं ज्ञेयमिति शेषः ॥ १३ ॥

भाषार्थः—

युगिति —विद्वान् जनों ने सम अर्थात् द्वितीय-चतुर्थादि स्थान को युक् कहा है, तथा विषम प्रथम-तृतीयादि स्थान को अयुक् कहा है। तथा चकार से अनोज युग्मादि भी सम की संज्ञा है। और ओज-अयुग्मादि विषम की संज्ञा है तथा सम अर्द्धसम और विषम ऐसे वृत्त तीन प्रकार का कहा है ॥१३॥

एतत्त्रयं लक्षयति—

अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः।
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते ॥१४॥

यस्येति यस्य वृत्तस्य चत्वारोऽङ्घ्रयः पादास्तुल्यलक्षणलक्षिताः तुल्येन समानेन एकेनेति यावत् लक्षणेन लक्षिता भवन्ति। तद् वृत्तं छन्दःशास्त्रतत्त्वज्ञाः एतच्छास्त्रपरमार्थवेत्तारः समं प्रचक्षते वदन्ति यथा श्र्यादि ॥ १४ ॥

अन्वयः —

यस्य चत्वारोऽङ्घ्रयः तुल्यलक्षणलक्षिता भवन्तीति शेष तत् वृत्तं छन्दःशास्त्रतत्त्वज्ञाः समं प्रचक्षते ॥१४॥

भाषार्थः —

अङ्घ्रय इति—जिस वृत्त में चारों पाद समान अर्थात् एक ही लक्षण से लक्षित अर्थात् संगत हों, उस वृत्त को छन्दःशास्त्र के तत्त्ववेत्ता सम वृत्त कहते हैं। उदाहरणार्थ जैसे श्री इत्यादिक तृतीयाध्याय में वर्णित किये जायंगे ॥१४॥

प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत्।
द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते ॥१५॥

प्रथमेति यस्य वृत्तस्य तृतीयः चरणः पादः प्रथमेन अङ्घ्रिणा पादेन समो भवेत्। द्वितीयः पादश्च चतुर्थपादवत् स्यात् तद्वृत्तम् अर्धसमम् उच्यते यथा द्रुतमध्यादि ॥१५॥

अन्वयः—

यस्य तृतीयश्चरणः प्रथमाङ्घ्रिसमो भवेत्, द्वितीयस्तुर्यवत भवेत् तत् अर्द्धसममुच्यते ॥१५॥

भाषार्थः —

प्रथमेति—जिस छन्द का तीसरा पाद प्रथम पाद के बराबर हो तथा द्वितीय पाद चतुर्थ पाद के सदृश हो उस वृत्त को अर्द्धसम कहते हैं। उदाहरणार्थ जैसे द्रुतमध्यादिक चतुर्थाध्याय में वर्णित किये जांयगे ॥१५॥

यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥१६॥

यस्येति यस्य पादचतुष्टयेऽपि परस्परं लक्ष्म लक्षणं भिन्नं भेदयुक्तम् भवति छन्दःशास्त्रविशारदाः तद्विद्वांसः तद् वृत्तं विषमम् आहुः कथयन्ति । यथा पदचतुरूर्द्ध्वादि ॥१६॥

अन्वयः—

यस्य पादचतुष्केऽपि लक्ष्म परस्परं भिन्नं भवेदिति शेषः तत् वृत्तं छन्दःशास्त्रविशारदाः विषममाहुः ॥१६॥

भाषार्थः—

यस्येति—जिस वृत्त में चारों पाद परस्पर भिन्न २ लक्षणों से लक्षित अर्थात् समन्वित हों उस वृत्त को छन्दःशास्त्र के वेत्ताओं ने विषम वृत्त कहा है। उदाहरणार्थ जैसे पदचतुरूर्द्ध्वादिक वृत्त पञ्चमाध्याय में वर्णन किये जांयगे ॥१६॥

आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्धितैः ।
पृथक्छन्दो भवेत्पादैर्यावत् षड्विंशतिं गतम् ॥१७॥

आरभ्येति एकाक्षरात्पादादारभ्य आदौ कृत्वा एकैकाक्षरेण वर्धितैः वृद्धिं प्रापितैः पादैरित्थंभूतैः षड्विंशतिं यावत् (२६) गतं प्राप्तं यावत्पर्यन्तं तत्प्राप्तिः भवति तावत्पर्यन्तं पृथक्पृथक्छन्दो भवेत् । तथाच प्रथमजातावुक्तायां चत्वारोऽप्येकाक्षराः पादा भवन्ति ।

अत्युक्काजातौ चत्वारोऽपि ह्यक्षराः पादाः भवन्ति। इत्थं षड्विंशतिं यावत् यथा–अपवाहाख्यवृत्तस्य चत्वारोऽपि पादाः षड्विंशतिवर्णप्रमाणा भवन्ति ॥१७॥

अन्वयः—

एकाक्षरात्पादादारभ्य एकैकाक्षरवर्धितैः पादैः षड्विंशतिं यावत् गतं पृथक् छन्दो भवेत् ॥१७॥

भाषार्थः—

आरभ्येति—एकाक्षर पाद वाली उक्ता जाति के एकाक्षर पाद से लेकर प्रतिजाति ( हर जाति ) के प्रत्येक पाद में एक २ अक्षर बढ़ाते जाओ, जब छब्बीस (२६) अक्षर का पाद बन जाय वहां तक सम्पूर्ण छन्द पृथक् २ अर्थात् भिन्न २ होते हैं।

जैसे उक्ता नाम की प्रथम जाति के चारों पाद एक २ अक्षरों के होते हैं, ऐसे ही छब्बीसवीं उत्कृति नामक जाति के चारों पाद छब्बीस २ अक्षर के होते हैं। सो इस क्रम से एकाक्षर जाति से षड्विंशति २६ वर्णात्मक जातिपर्यन्त सम्पूर्ण छन्द भिन्न २ जातीय ही हुए ॥१७॥

तदूर्ध्वं चण्डवृष्ट्यादिदण्डकाः परिकीर्तिताः।
शेषं गाथा त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः॥१८।

तदिति तस्याः षड्विंशत्यक्षरजातेरूर्ध्वं यावत्पादाक्षराणि स्युः ते चण्डवृष्टिरादिर्येषां ते च ते दण्डकश्च चण्डवृष्ट्यादिदण्डकाः परिकीर्तिताः कथिताः। यत् शेषम् उक्तान्यच्छन्दः सा गाथा उक्ता। सा च त्रिभिः षड्भिश्च चरणैः पादैरुपलक्षिता बोधिता युक्ता वा भवति ॥१८॥

अन्वयः—

तदूर्ध्वं चण्डवृष्ट्यादिदण्डकाः परिकीर्तिताः। शेषं त्रिभिः षड्भिश्चरणैश्चोपलक्षिता गाथा उक्तेति शेषः ॥१८।

भाषार्थः—

तदिति—षड्विंशतिवर्णात्मक ( छब्बीस अक्षर वाली ) उत्कृति से आगे

जितने २ पाद के अक्षर लें उनके अनुसार चण्डवृष्टि आदिक दण्डक हो जाते हैं जो तृतीयाध्याय के अन्त में वर्णन किये जायेंगे । जो कहे हुए छन्दों से अन्य कोई छन्द कहीं होता है उसे गाथा छन्द कहते हैं । वह गाथाछन्द कहीं २ पर तीन और छः २ पादों वाला भी होता है ॥ १८ ॥

इदानीं छन्दोजातीनामुद्देशमाह[1]—

उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठाऽन्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥१९॥

उक्तेति उक्ता १ अत्युक्ता २ मध्या ३ प्रतिष्ठा ४ अन्या सुपूर्विका सुप्रतिष्ठा इत्यर्थः ५ गायत्री ६ उष्णिक् ७ अनुष्टुप् ८ बृहती ९ पङ्क्तिः १० इत्युक्ता इति द्वाविंशेनान्वयः उत्तरत्राप्येवम् ॥१९॥

त्रिष्टुप् च जगती चैव तथाऽतिजगती मता ।
शक्वरी साऽतिपूर्वा स्यादष्ट्यत्यष्टी ततः स्मृते ॥२०॥

त्रिष्टुबिति त्रिष्टुप् ११ जगती १२ अतिजगती १३ शक्वरी १४ सा शक्वरी अतिपूर्वा स्याद् अतिशक्वरी इत्यर्थः १५ ततोऽग्रे अष्टिः १६ अत्यष्टिः १७ च स्मृते ॥२०।

धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संकृतिश्चापि[2] तथाभिकृतिरुत्कृतिः ॥२१॥

अन्वयः स्पष्टः

धृतिश्चेति धृतिः १८ अतिधृतिः १९ कृतिः २० प्रकृतिः २१ आकृतिः २२ विकृतिः २३ संकृतिः २४ अभिकृतिः २५ उत्कृतिः २६॥२१

इत्युक्ताश्छन्दसां संज्ञाः क्रमशो वच्मि साम्प्रतम् ।
लक्षणं सर्ववृत्तानां मात्रावृत्तानुपूर्वकम् ॥ २२ ॥

---

(टि०) १ नाममात्रेण वस्तुसंकीर्तनमुद्देशः । २ भूषणाद्यर्थभावान्न 'सम्परीति' सुट् ।

इति भट्टकेदारविरचितवृत्तरत्नाकरे प्रथमोऽध्यायः ।। १ ।।

इतीति इति अमुना प्रकारेण छन्दसां संज्ञा जात्याख्याः क्रमशः क्रमेण उक्ताः । सांप्रतं सर्ववृत्तानां श्रीप्रभृतीनां मात्रावृत्तान्यार्यादीनि अनुगतानि क्रमप्राप्तानि पूर्वं प्रथमं यस्मिंल्लक्षणे तन्मात्रावृत्तानुपूर्वकं लक्षणं ( जातावेकवचनं ) लक्षणानीत्यर्थः वक्ष्मि वदिष्यामीत्यर्थः । वर्तमानसमीपे भविष्यति लट् ॥ २२ ॥ इति वृत्तरत्नाकराख्यछन्दःशास्त्रस्य रत्नसंग्रहटीकायां प्रथमोऽध्यायः ॥ १ ॥

भाषार्थः—

उक्ता १ अत्युक्ता २ मध्या ३ प्रतिष्ठा ४ सुप्रतिष्ठा ५ गायत्री ६ उष्णिक् ७ अनुष्टुप् ८ वृहती ९ पङ्क्ति १० त्रिष्टुप् ११ जगती १२ अतिजगती १३ शक्करी १४ अतिशक्करि १५ अष्टि १६ अत्यष्टि १७ धृति १८ अतिधृति १९ कृति २० प्रकृति २१ आकृति २२ विकृति २३ संकृति २४ अभिकृति २५ और उत्कृति २६, यह छन्दों की संज्ञाएं अर्थात् जातियें क्रमशः कह दी हैं, अब आर्यादिक मात्रावृत्तों से लेकर सब वृत्तों का लक्षण आगे वर्णन करेंगे।

इति भाषाप्रभाकरे प्रथमोऽध्यायः

अथार्याप्रकरणम् ।

लक्ष्मैतत्सप्तगणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं नलघू वा प्रथमेऽर्धे नियतमार्यायाः ॥१॥
षष्ठे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदानियमः ।
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ २ ॥
त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः ।
पथ्येति नाम तस्याश्छन्दोविद्भिः समाख्यातम् ॥ ३ ॥

संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ।
यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥४॥

उभयार्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः ।
चपलेति नाम तस्याः प्रकीर्तितं नागराजेन ॥ ५ ॥

आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।
शेषे पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥६॥

प्राक्प्रतिपादितमर्द्धे प्रथमे प्रथमेतरे तु चपलायाः ।
लक्ष्माऽऽश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥७॥

"स्वरा अर्ध चार्यार्द्धम्[1]" ४ । १४ "अत्रायुङ् न ज्" ४।१५ "षष्ठो ज्" ४।१६ "न्लौ वा" ४।१७ इति चात्र पिङ्गलपादसूत्राणि ॥४॥

---

(टि०) १स्वराः सप्त 'गण' इत्यनुवृत्य वचनं विपरिणम्य सप्त गणा अर्द्धं च गणस्य मात्राद्वयात्मकम् ( गुरुरूपम् ) आर्यार्द्धं प्रथमं स्यात् ॥ अत्र च अयुक् प्रथमतृतीयादिः गणः ज् जगणो न स्यात् षष्ठश्च ज जगणः स्यात् यद्वा न्लौ नगणो लश्च स्याताम् इत्यर्थकानि ॥

# द्वितीयोऽध्यायः।

## तत्रार्याप्रकरणम्।

अत्रैव समन्वयो यथा :—

१ २ ३ ४ ५ ६ज० ७ गु०

-ऽऽ-ऽऽ-।।ऽ- ऽऽ-ऽ।।-।ऽ।-।।ऽ-ऽ

लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे जः।

१ २ ३ ४ ५ ल० ७ गु०

-ऽऽ-ऽ।।-ऽ ऽ।।ऽ-ऽ।।।-ऽऽ-ऽ-

षष्ठोऽयं नलघू वा प्रथमेऽर्धे नियतमार्यायाः॥ १॥

साम्प्रतमार्यालक्षणमाह॥ आर्यायाः प्रथमेऽर्धे एतल्लक्ष्म लक्षणं नियतं निश्चितं वर्तते। एतत्किं सप्त गणाश्चतुर्मात्रा गोपेताः अन्ते गेन गुरुणोपेता युक्ता भवन्ति। इहाऽस्यामार्यायां विषमे स्थाने प्रथम-तृतीय पञ्चम-सप्तम-गणरूपे जो जगणो मध्यगुरुः न भवति षष्ठश्चाऽयं जगणो भवति। अथवा नलघू नः त्रिलघुर्नगणश्च (।।।) लघुश्चेति द्वन्द्वे चतुर्लघुरित्यर्थः। नलघु इति पाठः समाहारद्वन्द्वेपि छन्दोभङ्गा-पत्तेरशुद्धः।नलघुर्वा इति पाठे नसहितो लघुरिति मध्यमलोपो बोध्यः। इत्यार्यायाः प्रथमदले निश्चितं लक्षणं भवति।

### अन्वयः।

आर्यायाः प्रथमे ऽर्धे एतल्लक्ष्म नियतं (यत्) सप्तगणा गोपेता भवन्ति, इह विषमे जो न, भवति (किन्तु) षष्ठोऽयं, न लघू वा (भवत इति विपरिणम्यते)॥ १॥

### भाषार्थः

लक्ष्मेति आर्या के प्रथम भाग का यह लक्षण निश्चित है कि इस में सात गण होते हैं जो गुरु से युक्त होते हैं, अर्थात् जिनके अन्त में एक गुरु होता है। इसआर्या में विषम अर्थात् प्रथम-तृतीय-पञ्चम-सप्तम स्थानों में मध्यगुरु जगण नहीं होता॥

छठा गण जगण होता है अथवा नलघु अर्थात् चार लघुरूप होता है जो लक्षण में घटा कर बतला दिये गये हैं ॥ १ ॥

शिष्येण पृष्टं क्वचिदार्यायाः पदनियमोऽप्यस्ति ? गुरुराह ।

"न्लौ[1] चेत्पादं द्वितीयादि" ४।१८ 'सप्तमः प्रथमादि" ४।१९ "अन्त्ये पञ्चमः" ४।२० "षष्ठश्च ल्" ४।२१ इति चात्र पि० सू०

समन्वयः

१ २ ३ ४ ५ ६ ७ गु०

--ऽ ऽ-- । ऽ ।--ऽ । ।--ऽ ऽ-- । । ऽ-- । । । । । । । ।--ऽ--

षष्ठे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदनियमः ।

१ २ ३ ४ ५ ल० ७ गु०

--। । ऽ-- ऽ ऽ-- । । ऽ-- ऽ ऽ-- । । । । -।-- ऽ ऽ-- ऽ

चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥२॥

षष्ठे न्ले सति द्वितीयलात्पूर्वं परके न्ले सति मुखलात्पूर्वं सयति० चरमेऽर्द्धे पञ्चमके न्ले सति तस्मात् पञ्चमकात् पूर्वं सयति० इहोत्तरार्द्धे षष्ठो लो ( मात्रारूपो ) भवतीत्यन्वयः ।

षष्ठे इति षष्ठे स्थाने न्ले नलघुरूपे चतुर्लघुके ( ।॥ ) गणे कृते सति द्वितीयलात् तस्यैव षष्ठस्य चतुर्लघुरूपस्य गणस्य द्वितीयलघोः पूर्वमिति शेषः ( दिग्योगलक्षणपञ्चमीबलेन इष्टानुरोधात् )

---

(टि०) १ न्लौ चेत् यदि षष्ठो गणश्चतुर्लघुरूपो भवति तदा द्वितीयादि द्वितीयाक्षरादारभ्य पदं प्रवर्तते ॥ सप्तमश्चेत् नलघुरूपस्तदा तस्य ( सप्तमस्यैव ) प्रथमाक्षरादारभ्य पदं प्रवर्तते ॥ अन्त्ये आर्योत्तरार्द्धे पञ्चमश्चेत् सर्वलघुः स्यात् तदापि तस्य ( पञ्चमस्य ) प्रथमादारतः पदं प्रवर्तते । अन्त्येऽर्द्धे षष्ठः यत्किञ्चित्षष्ठस्थानिकः लः लघुरेक एव स्यात् । इति क्रमेणैषामर्थाः ॥

प्रथमलघ्वन्ते सयतिपदनियमः यतिसहितस्य पदस्य सुप्तिङ-न्तरूपस्य नियमो नियमनं निरोधः समाप्तिरिति यावत् कर्तव्य इति शेषः । परके प्रत्यासत्या षष्ठापेक्षया परस्मिन् सप्तमे न्ले ( । । । । ) गणे कृते सति मुखलात् सप्तमस्यैव प्रथमलघोः पूर्वं षष्ठगणान्ते सयतिपदनियमः । एतत्सर्वं पूर्वार्द्धस्य लक्षणमुक्तम् :—

चरमे द्वितीये पुनरर्द्धे पञ्चमके न्ले नलघुरूपे ( । । । । ) सति तस्मात् पञ्चमगणात्पूर्वम् अर्थाच्चतुर्थगणान्ते । सयतिपदनियम इति सम्बध्यते । इह आर्योत्तरार्द्धे षष्ठो लः एको लघुरूप एव भवति नतु चतुर्मात्रात्मक इत्यर्थः । उत्तरार्द्धे एतावन्मात्रं विशेषं वदता-ऽन्यत्सर्वं पूर्वार्धसमं भवतीति द्योतितम् ॥ इदमेवात्रोदाहरणम्, उत्त-रत्रापि तदेवेति ॥ २ ।

अन्वयः । रत्नसंग्रहे

भाषार्थः—

**षष्ठ** इति छठे स्थान में नलघु अर्थात् चतुर्लघु रूप गण हो तो उस षष्ठ गण के द्वितीयलघु के पूर्व अर्थात प्रथमलघु के अन्त में यति अर्थात् विराम सहित पद सुप्तिङन्त रूप का नियम अर्थात् समाप्ति होती है । पर अर्थात् छठे से परे सप्तम गण के नलघु अर्थात् चतुर्लघुरूप होने से प्रथम अर्थात् सप्तम गण के प्रथमलघु के पूर्व छठे गण के अन्त में विराम सहित पद का नियम ( समाप्ति ) होता है । यह सब इतने तक आर्या के प्रथमार्ध का लक्षण कहा है । अब द्वितीयार्धका कहते हैं। चरम अर्थात् द्विती-यार्ध में पञ्चम गण के नलघु (चतुर्लघु) रूप होने से उस पञ्चम गण के पूर्व चतुर्थ गण के अन्त में यतिसहित पद की समाप्ति होती है । इस आर्या के उत्तरार्ध में छठा गण एक लघुस्वरूप ही होता है, अर्थात् चतुर्मात्रिक नहीं होता । इतना ही उत्तरार्ध का पूर्वार्ध से भेद है बाकी सब पूर्वार्ध के ही समान है । इस लक्षण का यही उदाहरण है आगे भी सब जगह जो लक्षण है वही उदाहरण है ॥ २ ॥

"त्रिषु गणेषु पादः पथ्याद्ये च" ४।२२पि० सू०

समन्वयः

१ २ ३ ४ ५ ६ ७ गु०

-ऽऽ-।ऽ।-ऽऽ- ।।ऽ-ऽऽ-।ऽ।-ऽऽ-ऽ

त्रिष्वं शकेषु पादो दलयोराद्येषु दृश्यते यस्याः ।

१ २ ३ ४ ५ ल० ७ गु०

-ऽऽ-।ऽ।-ऽऽ--ऽऽ-ऽऽ-।-ऽऽ- ऽ-

पथ्येति नाम तस्याश्छन्दोविद्भिः समाख्यातम् ।। ३ ।।

त्रिष्विति यस्या आर्यायाः द्वयोर्दलयोराद्येषु त्रिष्वंशेषु गणेषु द्वादशमात्रात्मकेषु पादो दृश्यते द्वादशमात्रान्ते पादसमाप्तिर्भवतीत्यर्थः प्रथमः तृतीयश्च पादो द्वादशमात्रात्मको भवतीति यावत् । नागराजेन पिङ्गलमुनिना तस्या आर्याया नाम पथ्येति प्रकीर्तितम् कथितम् । सर्वमन्यदार्यातुल्यम् । सर्वत्रात्र ऋषिनामनिर्देशः समूलताप्रदर्शनार्थः ६

अन्वयः—

यस्यां दलयोराद्येषु त्रिषु अंशकेषु पादो भवति छन्दोविद्भिः तस्याः नाम पथ्येति समाख्यातम् ।। ३ ।।

भाषार्थः—

त्रिष्विति जिस के पूर्वार्ध-उत्तरार्ध रूप दोनों दलों में आदि के तीन अंश १२ मात्रारूप तीनों गणों के अन्दर ही पाद की समाप्ति हो छन्दःशास्त्र के वेत्ताओंने उसका नाम पथ्या कहा है शेष सब आर्या के समान है ।। ३ ।।

"विपुलाऽन्या" ४।२३ इति पि० सू०

---

(टि०) १ यस्या आर्य्याया आद्ये चादन्त्ये (इत्यनुकृष्टम्) अर्द्धे आद्येषु त्रिषु गणेषु पादस्समाप्यते सा पथ्या इत्यर्थः ।। २ अन्या यस्या उभयोरर्द्धयोरन्यतरस्मिन् वा त्रिषु अंशकेषु पादो न विश्राम्यति सा विपुला ।

समन्वयः

१ २ ३ ४ ५ ६ ७ गु०

-ऽ ऽ- ।।ऽ-।।ऽ-।ऽ।-।। ऽ-।ऽ।-।। ऽ-ऽ-

संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ।

१ २ ३ ४ ५ ल० ७ गु०

-ऽ ऽ- ऽ ऽ-।।ऽ-ऽ ।।-ऽ।। ।-।-ऽ ऽ-ऽ

यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥ ४ ॥

यस्या आर्याया द्वयोः शकलयोः पूर्वार्द्ध-परार्द्धरूपखण्डयोः आदिमं गणत्रयं द्वादशमात्रारूपं संलङ्घ्यातिक्रम्य यत्र क्वचित् पादः प्रथमतृतीयपादसमाप्तिर्भवति तां पिङ्गलश्चासौ नागश्च पिङ्गलनागः (पिङ्गलाचार्यस्य शेषरूपत्वात्) विपुलार्यामिति समाख्याति ब्रूते ।४॥

अन्वयः—

यस्याः द्वयोः शकलयोः आदिमं गणत्रयं संलङ्घ्य पादो भवति तां पिङ्गलनागो विपुलामिति समाख्याति ॥ ४ ॥

भाषार्थः—

**समि**ति जिस के पूर्व तथा उत्तर दोनों अर्धों में पूर्व के १२ मात्रा रूप तीन गणों का लङ्घन करके चतुर्थगण में पाद समाप्ति हो उसका नाम पिङ्गलनाग (पिङ्गलाचार्य) ने विपुला कहा है ॥ ४ ॥

**"चपला द्वितीयचतुर्थौ ग्मध्ये जौ" ४।२५** इत्यधिकृत्य **"उभयार्द्धयोर्महाचपला" ४ । २७** इति पि० सू०

---

(टि०) १ यत्रोभयार्द्धयोः पूर्वार्द्धोत्तरार्द्धयोः ग्मध्ये गोः गुर्वोः मध्ये स्थितौ द्वितीयतुर्य्यौ जगणौ स्यातां सा चपला महाचपला नाम स्यादित्यर्थः ॥

समन्वयः

१ २ज० ३ ४ज० ५ ६ ७ गु०

-।।ऽ-।ऽ।-ऽऽ-।ऽ।-ऽऽ-।ऽ।-ऽ ऽ-ऽ-

उभयार्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः ।

१ २ज० ३ ४ज० ५ ल० ७ गु०

-।।ऽ-।ऽ ।-ऽऽ- ।ऽ।-ऽऽ-।-ऽऽ-ऽ-

चपलेति नाम तस्याः प्रकीर्तितं नागराजेन ॥ ५ ॥

उभयेति—यस्या आर्यायाः उभयार्द्धयोः पूर्वार्द्धोत्तरार्द्धयोः द्वितीयतुर्यौ द्वितीयचतुर्थौ जकारौ जगणौ गमध्यगौ गयोरभितः स्थितयोः गुर्वोः मध्यं गच्छत इति तौ तादृशौ स्यातां तस्या नाम नागराजेन चपलेति प्रकीर्तितं कथितम् । यथाऽत्र "र्धयोज" इति द्वितीयः "या" "का" इत्येतयोः पार्श्वद्वयावस्थितयोर्गुरुवर्णयोर्मध्ये स्थितो "द्वितीय" इति गणः तुर्यः सोऽपि पार्श्वद्वयावस्थितयोः 'रौ' 'तु' इति गुरुवर्णयोर्मध्ये स्थितः पैङ्गले त्वेषा महाचपला नाम्नोक्ता ॥ ५ ॥

अन्वयः—

यस्या उभयार्धयोः द्वितीय-तुर्यौ जकारौ गमध्यगौ स्यातां तस्याः नाम नागराजेन चपलेति प्रकीर्तितम् ॥ ५ ॥

भाषार्थः

उभयेति जिस आर्या के पूर्व तथा उत्तर दोनों अर्धों में द्वितीय और चतुर्थ गण जगण स्वरूप हों तथा वह जगण पूर्व तथा उत्तर में वर्तमान दोनों गुरुओं के मध्य में स्थित हों, अर्थात् जगण के पूर्व में भी तथा उत्तर में भी गुरु हो तो उसका नाम पिङ्गलाचार्य नागराज ने चपला कहा है । जैसे इसी में 'र्धयोर्ज' यह मध्यगुरुरूप दूसरा जगण पूर्व में वर्तमान 'या' और उत्तर में वर्तमान 'का' इन दोनों गुरुओं के मध्य में स्थित है ऐसे ही 'द्वितीय' यह चतुर्थ जगण भी 'रौ' और 'तु' इन दोनों गुरुओं के मध्य में स्थित है । पिङ्लाचार्य ने इस का नाम महाचपला कहा है ॥ ५ ॥

"पूर्वे मुखपूर्वा" ४।२४ इति पि० सू०

---

टि०)–१ पूर्वेऽर्द्धे चपलालक्षणं चेत् मुखचपला ।

समन्वयः

१ २ज० ३ ४ज० ५ ६ ७ गु०

-ऽ ऽ- ।ऽ।-ऽ ऽ-।ऽ।-ऽ। ।-।ऽ।-ऽ ऽ-ऽ-

आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ॥

१ २ ३ ४ ५ ल० ७ गु०

-ऽ ऽ- ऽ।।-ऽ ऽ- ।।।।-ऽ ऽ-।-ऽ ।।-ऽ-

शेषे पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ ६ ॥

आद्यमिति यस्याः आर्यायाः आद्यं दलं प्रथमं पूर्वार्द्धं (कर्तृ) समस्तं चपलागतम् चपलायां समन्वितं लक्ष्म लक्षणं भजेत आश्रयेत् शेषे पश्चिमे द्धे पूर्वजं सामान्यार्याभवं लक्ष्म लक्षणं यस्याः सा पूर्वज-लक्ष्मा भवति। सा मुनिना पिङ्गलेन मुखचपला (मुखे आदौ चपला यस्याः सा) उदिता कथिता ॥ ६ ॥

अन्वयः

यस्या आद्यं दलं समस्तं चपलागतं लक्ष्म भजेत शेषे पूर्वज लक्ष्मा सा मुनिना मुखचपला उदिता ॥ ६ ॥

भाषार्थः

आद्यमिति जिस आर्या का प्रथमार्ध सम्पूर्ण चपला ( महाचपला ) के लक्षण से लक्षित हो तथा उत्तरार्ध सामान्य आर्या के लक्षण से लक्षित हो पिङ्गलाचार्य ने उसका नाम मुखचपला कहा है ॥ ६ ॥

"जघनपूर्वेतरत्र"[1] ४।२६ इति पि० सू०

समन्वयः

१ २ ३ ४ ५ ६ ७ गु०

-ऽ।।-ऽ।।-ऽ ऽ-।।ऽ-।।ऽ-।ऽ।- ।।ऽ-ऽ-

प्राक्प्रतिपादितमर्धे प्रथमे प्रथमेतरे तु चपलायाः।

---

(टि०) १ इतरत्र अन्त्यऽर्द्धे चेत् जघनचपला।

१ २ज० ३ ४ज० ५ ल० ७ गु०
-ऽऽ-।ऽ।- ऽऽ-।ऽ।-ऽऽ-।-।।।।-ऽ

लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥ ७ ॥

इति पञ्चार्याभेदाः ।

प्रथमेऽर्द्धे प्राक् पूर्वं प्रतिपादितं कथितम् । "सप्त गणा गोपेता भवति नेह विषमे जः" इत्यादि लक्षणं भवति प्रथमेतरे तु पुनः चरमेऽर्द्धे चपलाया लक्ष्म लक्षणमाश्रयेत भजेत । सा विशुद्धधीभिः स्वच्छप्रज्ञैर्जघने पश्चाद्भागे चपला इवेति सा जघनचपला उक्ता कथिता ॥७

अन्वयः--

या प्रथमेऽर्द्धे प्राक् प्रतिपादितं, प्रथमेतरे तु चपलाया लक्ष्म आश्रयेत सा विशुद्धधीभिर्जघनचपला उक्ता ॥ ७ ॥

भाषार्थः—

प्रागिति जिस के प्रथम अर्द्ध में पहले कहा हुआ अर्थात् आर्या का सामान्य लक्षण, सप्तगणाः इत्यादिक मिलता हो तथा उत्तरार्ध चपला ( महाचपला ) के लक्षण से युक्त हो अर्थात् जो मुखचपला से विपरीत ( उलटी ) हो उस का नाम शुद्ध बुद्धि वाले विद्वानों ने जघनचपला कहा है, जिस का उदाहरण यही है ॥७॥

इत्यार्याप्रकरणम् ।

अधुना गीतिप्रकरणमाह ।

---

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेश ।१।
आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् ।
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥ २ ॥

आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः।
सोद्गीतिः किल कथिता तद्वद्व्यत्यंशभेदसंयुक्ता ॥३॥
आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम्।
इतरत्तद्वन्निखिलं भवति यदीयमुदितेयमार्यागीतिः ॥४॥

"आर्यार्द्धसमा गीतिः" ४।२८ इति पि० सू०

समन्वयः

१ २ ३ ४ ५ ६ज० ७ गु०
-ऽ ऽ-।।। ।--ऽ ऽ-।। ।।-।। ऽ-।ऽ।-ऽ।।ऽ
आर्याप्रथम दलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ॥
१ २ ३ ४ ५ ६ज० ७ गु०
-।।ऽ ।।।।-ऽ ऽ--ऽ ऽ--ऽ ऽ।ऽ।--ऽऽ-ऽ-
दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजङ्गेशः ॥ १ ॥

यदि कथमप्यार्यायाः प्रथमदलोक्तं पूर्वार्द्धोक्तं सप्त गणा गोपेता इत्यादिकं लक्षणमुभयोरपि दलयोरर्द्धयोर्भवेत् भुजङ्गेशः पिङ्गलः मुनिः कृता यतिभिर्विच्छेदैः शोभा श्रुतिसौभाग्यं यस्याः यया वा सा तथा तां गीतिं गीतवान् उक्तवान् ॥ १ ॥

अन्वयः—

यदि कथमपि आर्याप्रथमदलोक्तं लक्षणम् उभयोर्दलयोर्भवेत्, भुजङ्गेशः कृतयतिशोभां तां गीतिं गीतवान् ॥१॥

भाषार्थः —

आर्येति आर्या के प्रथमार्ध का जो 'सप्तगणाः, इत्यादिक लक्षण कहा है यदि वही लक्षण दोनों दलों ( खण्डों ) में मिल जाय तो यतियों से शोभायुक्त उस छन्द का नाम भुजङ्गेश पिङ्गलाचार्य ने गीति कहा है ॥१॥

---

(टि० —१ याऽऽर्या द्वितीयार्द्धेऽपि आद्येनार्द्धेन समा सा गीतिः।

"अन्त्येनोपगीतिः" ४।२९ इति पि० सू०

समन्वयः

१ २ ३ ४ ५ ल० ७ गु०

-ऽऽ-।ऽ।-ऽऽ-ऽ।।-ऽऽ-।-ऽऽ-ऽ

आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात्।

१ २ ३ ४ ५ ल० ७ गु०

-ऽ।।-ऽ।।-।।ऽ-।।ऽ-ऽ-।-ऽऽ-ऽ-

यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥ २ ॥

आर्येति आर्याद्वितीयकेऽर्धे यत् षष्ठलघ्वादि लक्षणं गदितं कथितं तल्लक्षणं यदि उभयोरपि दलयोः स्यात्तदा पिङ्गलो मुनिः तामुपगीतिं ब्रूते भणति ॥ २ ॥

अन्वयः —

आर्याद्वितीयकेऽर्धे यत् लक्षणं गदितं यदि तत् उभयोरपि दलयोः स्यात् तां मुनिः उपगीतिं ब्रूते ॥२॥

भाषार्थः --

आर्येति आर्या के द्वितीय भाग का जो चरमेऽर्ध, इत्यादिक लक्षण कहा है, यदि वह किसी तरह दोनों खण्डों में मिल जावे तो पिङ्गलमुनि ने उसका नाम उपगीति कहा है ॥२॥

"उत्क्रमेणोद्गीतिः" ४।३० इति पि० सू०

समन्वयः

१ २ ३ ४ ५ ल० ७ गु०

ऽऽ-।।ऽ-।।ऽ-ऽ।।-।।ऽ-।-ऽऽ-ऽ

आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याम्।

---

(टि०)–१ याऽऽर्या प्रथमार्द्धेऽपि अन्त्येन अर्द्धेन समा सा उपगीतिः। २ उत्क्रमो व्युत्क्रमो अर्द्धव्यत्यय इति यावत् तेनोपलक्षिता आर्या उद्गीतिर्नामेत्यर्थः।

१ २ ३ ४ ५ ६ ७ गु०
ऽ ऽ-ऽ ।। ।-।। ऽ- ऽऽ-ऽ ऽ-। ऽ।-ऽ ऽ-ऽ

**सोद्गीतिः किल कथिता तद्वद्यत्यंशभेद संयुक्ता ॥ ३ ॥**

यस्यां वृत्तौ, आर्यायाः शकलद्वितयं खण्डद्वयं व्यत्ययरचितं प्रथमे स्थाने द्वितीयं द्वितीयस्थाने प्रथमं भवेत् ( प्रथमे दले मात्राः २७ द्वितीयदले मात्राः ३० ) सा तद्वत् तेनैव प्रकारेण यतयश्च विरामस्थानानि अंशाश्च गणाः यत्यंशाः तेषां भेदस्तेन संयुक्ता उद्गीतिः कथिता किलशब्दो निश्चये ( एतद्ध्येवं किल श्रूयते ) ॥ ३ ॥

अन्वयः—

यस्याम् आर्याशकलद्वितयं व्यत्ययरचितं भवेत् सा तद्वद्यत्यंश भेदसंयुक्ता उद्गीतिः किल कथिता ॥३॥

भाषार्थः—

आर्येति आर्या के दोनों खण्ड यदि व्यत्यय से ( बदल कर ) अर्थात् प्रथम २७ मात्रिक खण्ड के स्थान में द्वितीय ३० मात्रिक खण्ड करके रक्खे जावें तो आर्या के समान यति आदि से युक्त उस छन्द को निश्चय से उद्गीति कहते हैं ॥३॥

**"अर्द्धे वसुगण आर्य्यागीतिः"** इति पि० सू० ४।३१

**समन्वयः**

१ २ ३ ४ ५ ६ ७ गु०गु०
ऽ ऽ-ऽ ऽ-ऽ ।।।। ऽ-ऽ ऽ-। ऽ।-।। ऽ-ऽ-ऽ

**आर्यापूर्वार्द्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् ।**

१ २ ३ ४ ५ ६ ७ गु०गु०
।।ऽ-ऽ ऽ-।। ऽ-। ऽ।-ऽ। ।-।ऽ।-ऽ ऽ-ऽ-ऽ-

**इतरत्तद्वन्निखिलं दलं यदीयमुदितेयमार्यागीतिः ॥ ४ ॥**

इति गीतिप्रकरणम् ॥

यदि आर्यापूर्वार्द्धमेकेनाधिकेन गुरुणा निधने अन्ते युक्तं

---

(टि०) १ आर्याप्रथमार्धे वसवोऽष्टौ गणा यत्र तादृशे सति आर्यागीतिर्नामेत्यर्थः॥

भवति । यदीयमितरदन्यत् निखिलं समस्तं तद्वत् तस्या एव पूर्वार्द्धंवद्भवति। तदेयमार्यागीतिरुदिता । आर्यायां हि पूर्वार्धे सान्तगुरुकाः सप्तगणाः । इह तु द्वयोरप्यर्द्धयोः अष्टौ अष्टौ गणाः ।। 'अर्द्धे वसुगण आर्यागीतिः' इति पि० सू० ४ । ३१ दर्शनात् ॥ ४ ॥

अन्वयः—

यदि आर्यापूर्वार्द्धं निधने एकेनाधिकेन गुरुणा युक्तं स्यात्, यदीयमितरन्निखिलं तद्वत्, इयम् आर्यागीतिरुदिता ॥ ४ ॥

भाषार्थः—

**आर्ये**ति यदि आर्या का पूर्वार्द्ध एक अधिक गुरु से युक्त हो, अर्थात् यदि आर्या का पूर्वार्द्ध सात गण और दो गुरुओं से युक्त कर दिया जाय, और जिसका उत्तरार्द्ध भी सम्पूर्ण पूर्वार्द्ध के ही समान हो तो उसका नाम आचार्यों ने आर्यागीति कहा है ॥ ४ ॥

इति गीति (४) प्रकरणम्

## अथ वैतीलीयप्रकरणम्

षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः।
न समाऽत्र पराश्रिताः कला वैतालीयेऽन्ते रलौ गुरुः।१।
पर्यन्ते यौ तथैव शेषं त्वौपच्छन्दासिकं सुधीभिरुक्तम्।२।
आपातलिका कथितेयं भाद्गुरुकावथ पूर्ववदन्यत्।३।
तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः।४।
उदीच्यवृत्तिर्द्वितीयलः सक्तोऽग्रेण भवेदयुग्मयोः ॥५॥
पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्तिरुदितेति युग्मयोः ॥६॥

यदा समावोजयुग्मकौ पूर्वयोर्भवति तत्प्रवृत्तकम् ॥७॥

अस्य युग्मरचिताऽपरान्तिका ॥ ८ ॥

अयुग्मगा चारुहासिनी।१। इति वैतालीयप्रकरणम्।६।

"वैतालीयं द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते ल्गौः"

इति ४।३२ पि० सू०

'शेषे परेण युङ् न साकम्" ४ ॥३५॥ 'षट् चामिश्रा युजि" ४॥३६॥ पि० सू० ॥ ३ ॥

समन्वयः

६ मात्रा र० ल०गु० ८ मात्रा र० ल०गु०

S I I S- S I S-I-S-S I I S S-S I S-I-S

षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः।

न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥१॥

षडिति विषमे पादे प्रथमतृतीयरूपे षट्कला मात्रा भवन्ति। समे द्वितीयचतुर्थरूपे अष्टौ कला भवन्ति च पुनस्ताः कलाः समे पादे निरन्तरा अव्यवहिता लघुरूपा एव केवला नो स्युः किन्तु गुरुमिश्रा एव तिष्ठन्तीत्यर्थः। अत्र वैतालीये समा कला द्वितीया चतुर्थी षष्ठी च पराश्रिताः परायामग्रेस्थितायामाश्रिता मिलिता न भवति। कोऽर्थः द्वितीया लघुरूपा कला तृतीयायां चतुर्थी पञ्चम्यां षष्ठी च

---

(टि०) १—अयुक्पादे ( १—३ ) द्विरावृत्ताः स्वराः षट् षड्मात्राः। युजि (२—४) पादे तु वसवोऽष्टौ मात्रा अन्ते तूभयत्र ल्गौः रगणलघुगुरवः शेषे उक्तमात्रा-नियमातिरिक्तस्थले युक् सममात्राः परेण साकं सह युक्ता न स्यात्। युजि समपादे षट् मात्रा अमिश्रा निरन्तरा न स्युः तदा वैतालीयं नामेति सूत्रत्रयार्थः ॥

सप्तम्यां न मिलेत् पूर्वाश्रितास्तु कामं स्युर्द्विती ।। प्रथमायां चतुर्थी तृतीयायामेवं च कामं स्यादिति यावत्। अन्ते विषमे षट्कलाग्रतः समेऽष्टकलाग्रतश्च परत्र रलौ रगणलघू कार्यौ तौ गुरु'क इति वैतालीये छन्दसि इदं लक्षणं प्रोक्तम् ।। १ ।

अन्वयः—

वैतालीये विषमे षट् कलाः, समे अष्टौ कलाः, ताश्च समें निरन्तरा नो स्युः । अत्र समा कला पराश्रिता न; अन्ते रलौ गुरुश्च भवति ।। १।।

भाषार्थः—

षडिति जिसके विषम (प्रथम-तृतीय) पाद में छः तथा सम (द्वितीय-चतुर्थ) पाद में आठ मात्रायें हों । सम (द्वितीय-चतुर्थ) पाद की मात्राएं निरन्तर यानी केवल लघु २ वा गुरु ही २ न हों, किन्तु लघु गुरु मिश्रित ही हों तथा सम अर्थात द्वितीय चतुर्थादि मात्रायें पर मात्रा के आश्रित न हों पूर्व मात्रा के आश्रित चाहे हों और जिस के अन्त में १ रगण १ लघु और १ गुरु हो उसको वैतालीय छन्द कहते हैं ।। १ ।।

"औपच्छन्दसिकम्" इति पि० सू० ४ ।। ३३ ।।

समन्वयः

| ६ मात्रा | र० | य० | ८ मात्रा | र० | य० |
|---|---|---|---|---|---|
| SSS-S | ISI | SS | SS S I I-S | IS-I | SS |

पर्यन्ते र्यौ तथैव शेषं त्वौपच्छन्दसिकं सुधीभिरुक्तम् ।।२।।

परीति पर्यन्ते समविषमपादयोः षण्णामष्टानां चान्ते र्यौ रगण-यगणौ भवतः शेषं तथैव षट्कला विषमेऽष्टौ समे इत्यादि तत् सुधीभिः पण्डितैः छन्दसां समीपमुपच्छन्दः तत्र भवम् औपच्छन्दसिकम् उक्तं भणितम् ।। २ ।।

अन्वयः—

पर्यन्ते र्यौ, शेषं तथैव, तत् सुधीभिः औपच्छन्दसिकम् उक्तम् ।।२।।

---

(टि०) १ यदि वैतालीयस्यान्ते एकोऽधिको ग् गुरुः शेषं सर्वं पूर्ववत् तदा औपच्छन्दसिकं नामेत्यर्थः ।

भाषार्थः—

परीति जिसके अन्त में रगण और यगण हों, अर्थात् जिस के चारों पादों में वैतालीय से एक २ गुरु अधिक हो, तथा बाकी सब वैतालीय के ही समान हो उसे पण्डितजनों ने औपच्छन्दसिक नाम से कहा है ॥ २ ॥

"आपातलिका[२] भ्गौ ग्" इति पि० सू० ४ । ३४ ॥

समन्वयः

६ मात्राः भ० २ गु० ८ मात्राः भ० २ गु०

S S । ।-S । ।-S S-S । । S । ।-S । ।-S S-

आपातलिका कथितेयं भाद्गुरुकावथ पूर्ववदन्यत् ॥३॥

आपेति समविषमपादयोः षण्णामष्टानां च कलानामन्ते भात् भगणात् गुरुकौ द्वौ गुरू भवतश्चेत् अथानन्तरमन्यत् पूर्ववत् वैतालीयवत् भवति तदा आपातलिका नाम छन्दो भवति ॥

अन्वयः

भाद्गुरुकौ; अथाऽन्यत्पूर्ववत्, इयम् आपातलिका कथिता ॥३॥

भाषार्थः—

भादिति जिस के सम और विषम पादों में क्रम से छः और आठ कलाओं के अन्त में एक भगण और दो गुरु हों, बाकी सब वैतालीय के समान हो, उसे आपातलिका कहते हैं ॥ ३ ॥

६ मात्राः र० ल० गु० ८ मात्राः र० ल० गु०

। S । S S । S- । S- । S । S S-S । S-।-S

तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः ॥४॥

यदि पूर्वोक्तानां त्रयाणां समस्तेषु पादेषु चतुर्षु द्वितीयो लघुर्मात्रा तृतीयेन सह युक् संमिलितो भवेत् तदा दक्षिणान्तिका नाम

---

(टि०) १ विषमे षण्मात्रातः समेऽष्टमात्रातश्च भगणो गुरुद्वयं च चेत् आपातलिका नामेत्यर्थः ॥

छन्दो भवति। शेषं यथाप्राप्तं वैतालीयौपच्छन्दसिकापातलिकापूर्वकत्वेन ज्ञेयोदाहार्या ॥ ४ ॥

अन्वयः

यदि समस्तपादेषु द्वितीयलः तृतीययुक् स्यादिति शेषः तदा दक्षिणान्तिका भवति ॥ ४ ॥

भाषार्थः—

तृतीयेति यदि सम्पूर्ण चारों पादों में दूसरा लघु तृतीय से युक्त हो, और बाकी सब पूर्ववत् हो उसे दक्षिणान्तिका कहते हैं ॥ ४ ॥

अयुक् तृतीयेनोदीच्यवृत्तिः इति पि० सू० ४।३८।

समन्वयः

६ मात्रा  र० ल०गु०  ८ मात्राः  र० ल०गु०

I S I S-S I S-I S-S S S I I-S I S I S-

उदीच्यवृत्तिर्द्वितीयलः सक्तोग्रेण भवेदयुग्मयोः ॥ ५ ॥

पूर्वेषु यदि अयुग्मयोर्विषमपादयोर्द्वितीयो लो मात्रा अग्रेण तृतीयेन लघुना मात्रारूपेण सह सक्तः संबद्धो मिलितो भवति शेषं च यथाप्राप्तं स्यात्तदा सा उदीच्यवृत्तिरुदिता मुनिना कथिता ॥ ५ ॥

अन्वयः—

यदि द्वितीयलः अयुग्मयोः अग्रेण सक्तो भवेत् तदा उदीच्यवृत्तिर्भवति ॥ ५ ॥

भाषार्थः—

उदीच्येति-यदि प्रथम--तृतीय पाद में द्वितीय लघु अगले अर्थात् तीसरे से युक्त हो बाकी सब पूर्ववत् हो उसे उदीच्यवृत्ति कहते हैं ॥ ५ ॥

---

(टि०) १ अयुक् विषमपाद (लुप्तविभक्तिकं) द्वितीय इति शेषः तृतीयेन सक्तश्चेत् तदा उदीच्यवृत्तिः छन्द इत्यर्थः।

'पञ्चमेन पूर्वः साकं प्राच्यवृत्तिः' इति पि० सू० ४।३७

समन्वयः

६ मात्राः र० ल०गु० ८ मात्राः र० ल०गु०

S S I I-S I S- I-S- S I S I I I-S I S-I-S

पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्तिरुदितेति युग्मयोः ॥ ६॥

पूर्वेणेति अथेति यद्यर्थे यदि युग्मयोः समपादयोः पञ्चमो लघुः पूर्वेण युतः चतुर्थेन संयुक्तो भवति सा प्राच्यवृत्तिरुदिता कथिता मुनिनेति शेषः ॥ ६ ॥

अन्वयः—

अथ युग्मयोः पञ्चमः पूर्वेण युतो भवति; सा प्राच्यवृत्तिरुदिता ॥ ६ ॥

भाषार्थः—

पूर्वणेति यदि युक् अर्थात् द्वितीय-चतुर्थ पाद में पञ्चम लघु पूर्व अर्थात् चतुर्थ से युक्त हो, बाकी सब पूर्ववत् हो उसे प्राच्यवृत्ति कहते हैं ॥ ६ ॥

"आभ्यां युगपत्प्रवृत्तकम्" इति पि० सू० ४।३८

समन्वयः

६ मात्राः र० ल०गु० ८ मात्राः र० ल०गु०

I S I S-S I S-I-S-S I S I I I-S I S-I-S

यदा समावोजयुग्मकौ पूर्वयोर्भवति तत्प्रवृत्तकम् ॥ ७॥

यदेति यदा पूर्वयोरुदीच्यवृत्ति-प्राच्यवृत्त्योः ओजयुग्मकौ विषमसमौ पादौ समौ तुल्यौ यथासंख्येन विषमसमसदृशौ भवतस्तदा प्रवृत्तकं नाम छन्दो भवति। अस्य प्रथम तृतीयपादौ उदीच्यवृत्तेः

(टि०)१ पूर्वः चतुर्थः पञ्चमेन सह युतः चेत् प्राच्यवृत्तिर्नामेत्यर्थः । २ उदीच्यवृत्तिप्राच्यवृत्तिभ्यां युगपत् एकत्रैवेत्यर्थः । विशेषस्तु अस्याधः रत्नसंग्रहे ऽवलोकनीयः ।

प्रथम-तृतीयपादाभ्यां सदृशौ (अर्थात्तत्र प्रथम-तृतीयपादयोः द्वितीय मात्रा तृतीयया मिलिता स्यात् ) द्वितीय-चतुर्थपादौ प्राच्यवृत्तेः द्वितीय-चतुर्थपादाभ्यां (अर्थात्तत्र द्वितीय-चतुर्थपादयोः पञ्चमी मात्रा चतुर्थ्या मिलिता स्यात्) समाविति तयोः प्रत्येकं तु अनियमोस्त्यन्यत्र इह तु नियमः कृतो यदवश्यमेव १।३ पादयोः द्वितीया तृतीया २।४ पादयोश्च पञ्चमी तुर्यया मिलिता स्यात् लक्ष्यं वीक्ष्य निश्चेयम् इति निष्कर्षः ॥ ७ ॥

अन्वयः—

यदा पूर्वयोः ओजयुग्मकौ समौ, तत् प्रवृत्तकं भवति ॥ ७ ॥

भाषार्थः—

यदेति जब पूर्व अर्थात् उदीच्यवृत्ति-प्राच्यवृत्ति छन्दों के विषम सम पाद, विषम सम पादों के सदृश हों अर्थात् जिसके प्रथम-तृतीय पाद उदीच्यवृत्ति के प्रथम-तृतीय पादों के सदृश हों, तथा द्वितीय-चतुर्थ पाद प्राच्यवृत्ति के द्वितीय-चतुर्थ पादों के सदृश हों, उसे प्रवृत्तक कहते हैं ॥ ७ ॥

"युगपरान्तिका" इति पि० सू० ४।४१

समन्वयः

८ मात्राः र० ल०गु०

ऽ । ऽ । ।। -ऽ। ऽ-।-ऽ

अस्य युग्मरचिताऽपरान्तिका ॥ ८ ॥

अस्येति अस्य प्रवृत्तकस्य युग्माभ्यां द्वितीयचतुर्थाभ्यां पादाभ्यां[1] सम्पूर्णा रचिता भवति साऽपरान्तिका नाम छन्दः भवति । षोडश षोडश मात्राश्चतुर्ष्वपि पादेषु पञ्चमी च चतुर्थमात्रया युक्ता कार्या पूर्वत्र १।३ पादयोः न तथेति निष्कर्षः ॥ ८ ॥

---

(टि०) १ प्रवृत्तकस्य युक्पादाभ्यां रचितेत्यर्थः ।

अन्वयः—

अस्य युग्मरचिता अपरान्तिका भवति ॥ ८ ॥

भाषार्थः—

अस्येति-जिसके चारों पाद प्रवृत्तक के द्वितीय चतुर्थ पादों से रचित हों, अर्थात जिसके चारों पाद सोलह २ मात्रा वाले हों, तथा पञ्चममात्रा चौथी से युक्त हो उसे अपरान्तिका कहते हैं ॥ ८ ॥

"[1]अयुक्चारुहासिनी" इति पि० सू० ४।४१

समन्वयः—

६ मात्राः र० ल०गु०

। ऽ । ऽ– ऽ । ऽ–।·ऽ

अयुग्मगा चारुहासिनी ॥९॥ इति वैतालीयं प्रकरणम् ॥९॥

अयुग्मेति। अस्य प्रवृत्तकस्य अयुग्मगा अयुक्पादैः विषमपादै रचिता चारुहासिनी नाम भवति। सर्वं पादेषु चतुर्दश२मात्राः द्वितीया तृतीयया मिलिता कार्येति निष्कर्षः ॥ ९ ॥

अन्वयः—

अयुग्मगा चारुहासिनी भवति ॥ ९ ॥

भाषार्थः—

अयुग्मेति—जिसके चारों पाद प्रवृत्तक के विषम (प्रथम-तृतीय) पादों से रचित हों, अर्थात् जिसके चारों पादों में चौदह २ मात्रा हों तथा द्वितीयमात्रा तृतीयमात्रा से युक्त हो उसे चारुहासिनी कहते हैं ॥ ९ ॥

इति वैतालीयं प्रकरणम् ॥

---

(टि०) १ अयुक्पादाभ्यां रचितेत्यर्थः।

अथ वक्त्रप्रकरणम् ॥

वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥१॥
युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम् ॥२॥
अयुजोर्जेन वारिधेस्तदेव विपरीतादि ॥३॥
चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः ॥४॥
यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता ॥५॥
सैतवस्याखिलेष्वपि ॥६॥ भेनाब्धितो भाद्विपुला ॥७॥
इत्थमन्या रश्चतुर्थात् ॥८॥ नोम्बुधेश्चेन्नविपुला ॥९॥
तोऽब्धेस्तत्पूर्वाऽन्या भवेत् ॥१०॥

अत्र "पादस्यानुष्टुब्वक्त्रम्" ५ । ९ । इत्यधिकृत्य "न प्रथमात् स्नौ" ५ । १० इत्याह "द्वितीयचतुर्थयो रश्च" ५।११। "वाऽन्यत्" ५।१२ "य चतुर्थात्" ५।१३ इति पि॰सू॰

समन्वयः

गु॰ म॰ य॰ ल॰गु॰ म॰ य॰ गु॰
ऽ- ऽऽऽ-।ऽ ऽ-ऽ-ऽ-ऽऽऽ-। ऽ ऽ-।

वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥१॥

वक्त्रेति आद्यात् प्रथमाक्षरात् ( दिग्योगे पञ्चमी तथाब्धेरित्यत्रापि ) परतो नसौ नगणसगणौ न स्यातां भवेतां । किन्तु अब्धेः चतुर्थादक्षरात् परो यो यगणः स्यात् ( समयोश्च पादयोराद्यक्ष-

---

(टि॰) १ पादस्येति आसप्तमाध्यायान्तम् अनुष्टुप्-वक्त्रमिति पदद्वयं च पदचतुरुक्तिप्राग् अधिक्रियते । प्रथमाक्षरादग्रे स्नौ सगणनगणौ न कार्यौ, द्वितीयचतुर्थपादयोश्च प्रथमात् रगणो न कार्यः, अन्यत् सगणनगणाभ्यां मगणादि त्रिकान्तरं वा कार्यं, चतुर्थाक्षरात् य ( लुप्तविभक्तिकं ) यगणश्च कार्यं इति सूत्रपञ्चकार्थः ॥

रादूर्ध्वं रगणोपि न कार्यः इति सम्प्रदायः ) तदा अनुष्टुभि अनुष्टु-प्प्रकरणे वक्त्रं नाम छन्दः ख्यातं प्रसिद्धम्। अर्द्धोऽयम् ॥ १ ॥

अन्वयः—

आद्यात् नसौ न स्यातां, अब्धेर्यः स्यात्, तदा अनुष्टुभि वक्त्रं (नाम छन्दः) ख्यातम् ॥१॥

भाषार्थः—

वक्त्रमिति—जिसमें प्रथम अक्षर से परे नगण और सगण न हों ( और समपाद में प्रथमाक्षर से परे रगण भी न होना चाहिये ऐसा सम्प्रदाय प्रसिद्ध है ) तथा चार अक्षरों से परे एक यगण हो वह अष्टाक्षरात्मक अनुष्टुप् प्रकरण में वक्त्र नामक छन्द कहा है ॥१॥

"पथ्या युजो ज्"[1] इति पि० सू० ५।१४।

समन्वयः

ल० त० य० गु०गु० म० ज० गु०
I-S S I-I S S S-S-S S S-I S I-S

युजोर्येन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम् ॥ २ ॥

युजोरिति-युजोः समपादयोः सरिद्भर्तुः समुद्राच्चतुर्थाक्षरात् परतो येन यगणेन सहितं पथ्यावक्त्रं नाम छन्दः प्रकीर्तितं कथितं पिङ्गल-मुनिना तद्यथा "पथ्या युजो ज्" ५।१४ विषमयोस्तु यगणः सामान्येन पूर्वतः प्राप्तः ॥ २ ॥

अन्वयः—

युजोः सरिद्भर्तुः जेन पथ्यावक्त्रं प्रकीर्तितम् ॥२॥

भाषार्थः—

युजोरिति—"युक्" द्वितीय-चतुर्थात्मक समपादों में सरिद्भर्ता अर्थात्

---

(टि०) १ चतुर्थादिति अनुवृत्य युजः पादस्य चतुर्थाक्षरात् अग्रे जगणः प्रयोज्यः तदा पथ्येत्यर्थः।

समुद्र की संख्या, चार ( चतुर्थाक्षर ) से परे जगण हो तथा विषम प्रथम-तृतीय पादों में पूर्ववत् चतुर्थाक्षर से परे यगण हो तो उस छन्द का पथ्यावक्त्रा नाम कहा है॥२॥

"विपरीतैकीयम्"[1] इति पि० सू० ५।१५

समन्वयः

ल० य० ज० गु०ल० भ० य० ल०

।। ऽ ऽ--। ऽ ।--ऽ-।--ऽ। ।--। ऽ ऽ--।

**अयुजोर्जेन वारिधेस्तदेव विपरीतादि ॥ ३ ॥**

**अयुजोरिति-अयुजोर्विषमपादयोर्वारिधेश्चतुर्थाक्षरात् परतः जेन जगणेन सहितं विपरीतादि विपरीतशब्दादि तदेव पथ्यावक्त्रं विपरीत· पथ्यावक्त्रं नाम छन्दो भवतीत्यर्थः। अर्थात्समयोर्यगणो यथाप्राप्तः मुनिस्तु "विपरीतैकीयम्" इति सू० ५।१५ ॥३॥**

अन्वयः--

अयुजोः वारिधेः जेन तदेव विपरीतादि भवति ॥३॥

भाषार्थः--

अयुजोरिति--अयुक् अर्थात् विषम ( प्रथम-तृतीय ) पादों में चतुर्थाक्षर से परे जगण हो तो वही ( पथ्यावक्त्रा ही ) विपरीतादिक अर्थात् विपरीतपथ्यावक्त्र नामक छन्द होता है ॥३॥

"चपलाऽयुजो न्"[2] इति पि० सू० ५।१६

समन्वयः

ल० य० न० गु०ल०भ० य० गु०

।-। ऽ ऽ--। । ।--ऽ-।--ऽ ऽ ऽ--। ऽ-ऽ--ऽ

**चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः ॥ ४ ॥**

**चपलेति। यदि अयुजोः विषमपादयोः पयोराशेः समुद्राच्चतुर्था-**

---

(टि०)१उक्तात् विपरीतलक्षणा पथ्येति एकीयं मतमित्यर्थः॥२ अयुजः प्रथमस्य तृतीयस्य च चतुर्थाक्षरात् नगणः युक्पादस्य यगणस्तदा चपलेत्यर्थः।

त्पात् नकारो नगणो भवति तदा चपलावक्त्रं नाम छन्दः स्यात्

अन्वयः--

अयुजोः पयोराशेः नकारश्चेत् चपलावक्त्रं (भवति) ॥४॥

भावार्थः --

**चपले**ति--यदि अयुक् अर्थात् विषम (प्रथम-तृतीय) पादों में "पयोराशि" समुद्रसंख्या चार (चतुर्थाक्षर) से परे नगण हो, तथा समपादों में पूर्ववत् (चतुर्थाक्षर से परे यगण) हो तो चपलावक्त्र नामक छन्द होता है ॥४॥

"विपुला युग्लः सप्तमः" इति पि० सू० ५।१७

समन्वयः

म० य० गु० गु० भ० स० ल०गु०

ऽ ऽ ऽ-- ऽ।ऽ-- ऽ-ऽ-- ऽ ऽ ऽ-- । ।ऽ--।--ऽ

यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता ॥ ५ ॥

यस्यामिति। यस्यां छन्दोव्यक्तौ युग्मे समपादे सप्तमो वर्णो लो लघुर्भवति सा युग्मविपुला मताऽभिप्रेता मुनेरिति शेषः "विपुला युग्लः सप्तमः" वक्त्रमारभ्य सर्वे अर्द्धाः ॥ ५ ॥

अन्वयः--

यस्यां युग्मे सप्तमो लः, सा युग्मविपुला मता ॥५॥

भावार्थः--

**यस्यामि**ति--जिसमें सम अर्थात् द्वितीय-चतुर्थ पादों में सप्तम लघु हो, वह मुनि को युग्मविपुला नाम से इष्ट है, अर्थात् उसका मुनि ने युग्मविपुला नाम कहा है ॥५॥

"सर्वतः सैतवस्य" इति पि० सू० ५।१८

---

(टि०) १ युगिति (लुप्तविभक्तिकं) युग्पादे सप्तमो वर्णो लः लघुश्चेत् विपुला नामेत्यर्थः। २ यद्यपि पथ्यायामपि युजोः सप्तमो लस्तथापि तत्र जगणेनैव अत्र तु नजभतैः। ननु जगणपक्षे तथापि सङ्करः इति चेत्तर्हि तत्र संज्ञाविकल्प एवास्तु इति विद्धि ॥ ३ सर्वतः सर्वेषु पादेषु सार्वविभक्तिकस्तसिः। सप्तमो लश्चेत्सैतवमते विपुलेत्यर्थः ॥

समन्वयः

गु० य० ज० गु०
ऽ-।ऽ ऽ-- ।ऽ। -ऽ

सैतवस्याखिलेष्वपि ॥ ६ ॥

सैतवस्येति—सैतवस्याचार्यस्य मते यस्याः अखिलेषु समस्तेषु चतुर्षु पादेषु सप्तमो लघुर्भवति सा विपुला भवति ॥ इमं पादं चतुर्वारं पठित्वा श्लोकपूर्तिः । एवं सति एकत्रोदाहरणत्वसम्भवे अन्यत्राऽपि बोध्यम् ॥ ६ ॥

अन्वयः--

सैतवस्य अखिलेष्वपि सप्तमः (चेत्) लः विपुला भवतीति शेषः॥६॥

भाषार्थः--

सैतवस्येति—सैतव आचार्य के मत में जिसके सम्पूर्ण चारों पादों में सप्तम लघु हो वह विपुला छन्द होता है ॥६॥

इतश्चतुर्विषये "[1]श्रौ न्तौ" इति पि० सू० ५।१६ ।

समन्वयः

गु० र० भ० गु०
ऽ-ऽ । ऽ-ऽ ।। -ऽ

भेनाब्धितो भाद्विपुला ॥७॥

भेनेति । अब्धितः समुद्राच्चतुर्थाक्षराद्भेन भगणेन उपलक्षिता चेत् भविपुला भात् भकारात्परा विपुला भवतीत्यर्थः ॥ ७ ॥

अन्वयः--

अब्धितः भेन भाद्विपुला भवति ॥७॥

---

(टि) १ यदि चतुर्थाक्षरात् भगण-रगणौ नगण-तगणौ वा स्यातां तदा पृथक् २ भविपुलादिनामानीत्यर्थः ॥

भाषार्थः—

भेनेति—अब्धि, समुद्र ( चतुर्थाक्षर ) से परे भगण हो तो भ से परे विपुला अर्थात् भविपुला नामक छन्द होता है ॥७॥

गु० य० र० गु०

S–IS S– SIS–S

इत्थमन्या रश्चतुर्थात् ॥८॥

इत्थमिति इत्थममुना प्रकारेण यदि चतुर्थाच्चतुर्थाक्षरात् रो रगणो भवति तदाऽन्या रविपुला भवतीत्यर्थः ॥ ८॥

अन्वयः—

इत्थं चतुर्थात् रश्चेत् अन्या (रविपुला भवति) ॥८॥

भाषार्थः –

इत्थमिति—इसी प्रकार यदि चतुर्थाक्षर से परे रगण हो तो अन्या अर्थात् रविपुला होती है ॥८॥

गु० य० न० गु०

S– ISSI II–S

नोम्बुधेश्चेन्न विपुला ॥९॥

नो इति अम्बुधेः समुद्राच्चतुर्थाक्षरात्परो यदि नो नगणस्तदा नविपुला भवति ॥ ९ ॥

अन्वयः—

चेत् अम्बुधेः नः नविपुला (भवति) ॥९॥

भाषार्थः—

न इति—अम्बुधि अर्थात् चतुर्थाक्षर से परे यदि नगण हो तो नविपुला नामक छन्द होता है ॥९॥

गु० म० त० गु०

S– SSS–S SI–S

तोऽब्धेस्तत्पूर्वान्या भवेत् ॥१०॥ इति वक्त्रप्रकरणम् ॥

ते इति अब्धेश्चतुर्थाक्षराद्यदि तस्तदा तत्पूर्वा तकारपूर्वा अन्या विपुला तविपुला भवतीत्यर्थः ॥१०॥

अन्वयः--

चेत् अब्धेः तः तत्पूर्वा अन्या भवेत् ॥१०॥

भावार्थः--

त इति--'अब्धि' चतुर्थाक्षर से परे यदि तगण हो, तो वह तकार है पूर्व जिसके ऐसी अन्या विपुला अर्थात् तविपुला होती है ॥१०॥

मञ्जर्यां तु विषमवृत्तान्ते वक्त्रप्रकरणमाह तद्यथा ।

"भवत्यर्द्धसमं वक्त्रं विषमञ्च कदाचन ॥
तयोर्द्वयोरुपान्तेऽत्र छन्दस्तदधुनोच्यते" ॥

इत्याद्युक्त्वान्ते ।

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः ॥
गुरु षष्ठं च पादानां शेषेष्वनियमो मतः ॥
प्रयोगे प्रायिकं प्राहुः केप्येतद्वक्त्रलक्षणम् ॥
लोकेऽनुष्टुबिति ख्यातं तस्याऽष्टाक्षरता कृता ॥

इति वक्त्रप्रकरणम् ॥

अथ मात्रासमान्याह--

द्विकगुणितवसुलघुरचलधृतिरिति ॥१॥
मात्रासमकं नवमो ल्गोऽन्त्यः ॥२॥
जो न्लावथाम्बुधेर्विश्लोकः ॥३॥
तद्युगलाद्वानवासिका स्यात् ॥४॥
वाणाष्टनवसु यदि लाश्चित्रा ॥५॥
उपचित्रा नवमे परयुक्ते ॥६॥ (अष्टाभ्यो भाद्गावुपचित्रा)
यदतीतकृतविविधलक्ष्मयुतैः। मात्रासमादिपादैः कलितम्।
अनियतवृत्तपरिमाणसहितं। प्रथितं जगत्सु पादाकुलकम् ७।

वृत्तस्य लो विना वर्णैर्गा वर्णा गुरुभिस्तथा।
गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥८॥
"गीत्यार्या लः[१]" इति पि० सू० ४।४८।

**समन्वयः**

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
द्वि क गु णि त व सु ल घु र च ल धृ ति रि ति ॥ १ ॥

द्विकेति द्वावेव द्विकौ द्वाभ्यां गुणिता वसवोऽष्टौ लघवो यस्यां सा द्विकगुणितवसुलघुः अचलधृतिर्नाम छन्दो भवति ॥ तथा पादाकुलकच्छन्दो यावद्द्विकगुणितवसुलघुरिति वर्तते। तेनोत्तरत्र षोडशमात्रा अधिक्रियन्ते अत्रेतिशब्देन 'गीत्यार्या लः" इति पि०सू०४।४८। उक्ता गीत्यार्येति संज्ञाऽपि बोधिता तत्र च "शिखा विपर्यस्तार्द्धा" ४।४९। इति छन्दोऽन्तरमप्युक्तम् ॥ १ ॥

अन्वयः—

द्विकगुणितवसुलघुः अचलधृतिरिति भवति ॥१॥

भाषार्थः—

द्विकेति—'द्विक्' दो से गुने हुए 'वसु' आठ लघु अर्थात् सोलह लघु हों तो अचलधृतिनामक छन्द होता है। ( परन्तु पिङ्गलाचार्य ने अपने सूत्र में इसका नाम गीत्यार्या तथा शिखा नामक और छन्द भी लिखा है ) ॥१॥

"गन्ता द्विर्वसवो मात्रासमकं नवमः[२] इति पि० सू० ४।४

---

(टि०) १ यत्र पादे द्विर्वसवः (अनुवृत्तमिदं पूर्वसूत्रतः) षोडश लघवो भवन्ति सा गीत्यार्या नाम जातिः। लग्रहणे प्रकृते पुनर्लग्रहणं केवलैकमात्रिकत्वार्थम्। २ यत्र पादे गन्ता गुर्वन्ता द्विर्वसवः षोडश लः ( मात्राः ) नवमश्च लघुः शेषं परेणेत्यादि पूर्ववत्।

लु० गु०
१–२ ३–४ ५ ६ ७–८ ९ १० ११–१२ १३–१४ १५–१६
मा त्रा स म कं न व मो लु गो ऽन्त्यः ॥२॥

मात्रेति। यत्र नवमो ल् लघुः अन्त्यः अन्ते भवश्च ग् गुरुः स्यात् तत् मात्रासमकं नाम छन्दः स्यात्। षोडशमात्राश्चाऽत्र। नवमान्त्ययोर्लघुगुरुनियमाच्छेषे नियमाभावः सूचितः ॥ २ ॥

अन्वयः—

यत्र नवमो ल्,अन्त्यो ग् तन् मात्रासमकं भवति ॥२॥

भाषार्थः—

मात्रेति—जिसकी सोलह मात्राओं में नवम मात्रा १ लघुरूप तथा अन्तिम (सोलहवीं) मात्रा १ गुरुरूप हो वह मात्रासमक नाम छन्द होता है ॥२॥

## विश्लोकः पञ्चमाष्टमौ[1] ।४।४४। पि० सू०

ज०
१–२ ३–४ ५ ६–७ ८ ९–१० ११–१२ १३–१४ १५–१६
जो न्लौ वथाम्बु धे विं श्लो कः ॥ ३ ॥

ज इति यदि अम्बुधेश्चतुर्भ्यो मात्राभ्यः परो जगणो[2] भवति अथ अथवा कुत्र चित् न्लौ नगण-लघू (।।।।) भवतस्तदा स विश्लोको नाम छन्दो भवति ॥ ३ ॥

अन्वयः—

अम्बुधेर्जः, अथ न्लौ (चेत्) तदा विश्लोको भवति ॥३॥

भाषार्थः—

ज इति—यदि अम्बुधि अर्थात् चार मात्राओं के अन्त में जगण हो, अथवा नगण-लघु अर्थात् चार लघु हों तो विश्लोकनामक छन्द होता है ॥३॥

---

(टि०) १ यत्र पञ्चमाष्टममात्रे लघुरूपे। २ अत्र जगणो न्लोस्तूदाहरणं मृग्यम्।

## द्वादशश्च वानवासिका। ४। ४३ पि० सू०

समन्वयः
ज०
१-२ ३ ४ ५-६ ७-८ ९ १०-११ १२ १३-१४ १५-१६
त द्युग ला द्वा न वा सि का स्यात् ॥४॥

तदिति--तद्युगलादम्बुधियुग्मात् अष्टाभ्यो मात्राभ्यः परो यदि जो जगणः अथवा क्वचित् न्लौ नगण-लघू (।।।) भवतः (पूर्वतोऽनुवर्त्यैदमेवं व्याख्यानम्) तदा वानवासिका नाम छन्दो भवति ॥ ४ ॥

अन्वयः—

चेत् तद्युगलात् जः, अथ न्लौ वानवासिका स्यात् ॥४॥

भाषार्थः

तदिति—यदि उस अम्बुधि के युगल अर्थात् आठ मात्राओं से परे जगण अथवा न-लघु (।।।। चार लघु) हों तो वानवासिका नाम छन्द होता है ॥४॥

## चित्रा नवमश्च[२] । ४ । ४५ । पि० सू०

समन्वयः

ल० ल०ल०
१-२ ३-४ ५ ६ ७ ८ ९ १० ११-१२ १३-१४ १५-१६
वा णाष्ट न व सु यदि ल श्चि त्रा ॥

वाणेति—वाणाष्टनवसु पञ्चमाष्टमनवममात्रासु यदि लो लघुः अर्थाल्लघुरूपास्ताः ५ । ८ । ९ । मात्रा भवन्ति शेषं पूर्ववत् तदा चित्रा नाम छन्दो भवति ॥ ५ ॥

अन्वयः—

यदि वाणाष्टनवसु लः, चित्रा भवति ॥५॥

भाषार्थः—

वाणेति—वाण अर्थात् पांचमीं और आठमी तथा नवमी मात्राओं में यदि लघु हो अर्थात ५ । ८ । ९ मात्राएं केवल लघुरूप हों तो चित्रा छन्द होता है ॥५॥

---

(टि०) १ यत्र मात्रासमकस्य पादे द्वादशी चात् नवमी च मात्रा लघुरूपा सा।
२ यस्य नवमी चात् पञ्चमाष्टम्यौ मात्रे लघुरूपे सा।

# परंयुक्तेनोपाचित्रा ।४।४६ पि० सू०

**समन्वयः**

१ २ ३--४ ५--६ ७ ८ ९--१० ११ १२ १३--१४ १५--१६

**उ प चि त्रा न व मे प र यु क्ते ॥६॥**

**उपेति मात्राषोडशके अष्टाभ्यो मात्राभ्यः नवमे परयुक्ते दशमयुक्ते सति उपचित्रा भवति ॥ ६ ॥**

**अन्वयः--**

**नवमे परयुक्ते सति उपचित्रा भवति ॥६॥**

**भाषार्थः—**

**उपे**ति -यदि नवमी मात्रा दशमी से युक्त हो अर्थात् गुरु[2] हो तो उपचित्रा छन्द होता है ॥६॥

**अन्यत्र विशेषः ।**

भ० गु० गु०

१-२ ३-४ ५-६ ७-८ ९-१० ११ १२ १३-१४ १५-१६

**(अ ष्टा भ्यो भा द्गा वु प चि त्रा) ॥**

**(अष्टाभ्य इति यस्याम् अष्टाभ्यो मात्राभ्यः परस्मात् भगणाद् द्वौ गुरू भवतः सा उपचित्रा स्यात् ) ॥**

**अन्वयः--**

**( चेत् अष्टाभ्यो भाद् गौ उपचित्रा भवति )**

**भाषार्थः--**

**अष्टाभ्य** इति--यदि आठमी मात्रा से परे एक भगण और दो गुरु हों तो उपचित्रा छन्द होता है ॥ यह उपचित्रा का लक्षण पुस्तकान्तर में प्रतिपादन किया है )

---

**(टि०)**१ नवम इत्यनुवृत्य तृतीयया विपरिणम्य नवमेन दशमेन सहैकीभूतेनेत्यर्थः ।
२ क्योंकि गुरु होने से ही दो मात्राएं एकाक्षर में संयुक्त मिल सकती हैं क्योंकि गुरुही द्विमात्रिक हुआ करता है ।

**एभिः पादाकुलकम्** । ४ । ४७ । पि० सू०

समन्वयः

ल० ल०ल०० गु०

१ २ ३-४ ५ ६ ७ ८ ९ १० ११-१२ १३ १४ १५-१६

य द ती त कृत विविध ल क्ष्म यु तैः ।

ज० गु०

१-२ ३-४ ५.६-७ ८ ९-१० ११-१२ १३ १४ १५-१६

मा त्रा समादि पा दैः क लि तम् ।

ज० गु०

१ २ ३ ४ ५-६ ७ ८ ९ १०-११ १२ १३ १४ १५-१६

अनि य त वृ त्त प रि मा ण स हि तं ।

ज० गु०

१ २ ३-४ ५ ६-७ ८ ९-१० ११-१२ १३ १४ १५-१६

प्रथि तं ज ग त्सु पा दा कु ल कम् ॥८॥

यदिति ॥ यत् छन्दः अतीते पूर्वत्र कृतानि विविधानि नानारूपाणि यानि लक्ष्माणि लक्षणानि तद्युक्तैः प्रागुक्तानां मात्रासमादीनां पञ्चानां पादैः कलितं तथा ऽनियतं नियमरहितं वृत्तमेकवृत्तलक्षणं तेन तथा यद् ( वृत्तस्य ) षोडशमात्रात्मकं परिमाणं तेन सहितमेवंविधं तत् पादाकुलकं नाम छन्दो जगत्सु संसारे प्रथितं प्रसिद्धं भवति ॥८॥

अन्वयः--

यत्. अतीतकृतविविधलक्ष्मयुतैः, मात्रासमादिपादैः कलितम् अनियतवृत्तपरिमाणसहितं तत् जगत्सु पादाकुलकं प्रथितम् ॥८॥

---

(टि०)१ एषां पञ्चानां मध्ये यैः कैश्चिदपि पादैः मिश्रितैरित्यर्थः । नन्वेवम् उपजातितः को भेदः?, शृणु तत्र प्रतिपादमेकलक्षणयोगः अत्र तु अनेकलक्षणयोगोऽपि यथा यदतीतेत्यत्रैव आद्ये मात्रासमकविश्लोकचित्राणां । द्वितीये विश्लोकोपचित्रयोः । तृतीये मात्रासमकवानवासिकयोः । तुर्ये उपचित्राविश्लोकयोः । केचित्तु अन्वर्थसंज्ञया सर्ववृत्तविषयकमेतदिति प्राहुः ।

भावार्थः--

यदिति—जो छन्द अतीत अर्थात् पूर्व में (अभी) किये हुए अनेक प्रकार के लक्षणों से युक्त मात्रासमक आदि छन्दों के पादों से बना हो, ( इसी बात को विस्तृत करता है ) जिसमें किसी एक वृत्त का लक्षण नियत न हो। किन्तु एक पाद में किसी वृत्त का, दूसरे में किसी वृत्त का, इस प्रकार भिन्न २ पादों में भिन्न २ लक्षण मिलें। तथा जो षोडशमात्रात्मक परिमाण से युक्त हों अथवा एक ही पाद में कई लक्षण मिल जावें तो वह छन्द जगत में पादाकुलक के नाम से प्रसिद्ध है ॥८॥

वृत्ते लघुगुरुसंख्याज्ञानोपायमाह

**सा[1] यद्येन न समा लां ग्लः** । ४ । ५३ ॥ पि॰ सू॰

समन्वयः

**वृत्तस्य लो विना वर्णैर्गा, वर्णा गुरुभिस्तथा ॥**
**गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥९॥**

अन्वयः--

वृत्तस्य लो वर्णैर्विना गा ज्ञेया इति शेषः, वृत्तस्य लो गुरुभिर्विना वर्णा ज्ञेयाः। तथा वृत्तस्य लो लैर्विना दले सति इति शेषः गुरवो भवन्ति इति प्रमाणं नित्यं निश्चितम् ॥९॥

वृत्तस्येति ॥ वृत्तस्य लो मात्रा वर्णैर्विना गा गुरवो ज्ञेया इत्यध्याहारः। लो वर्णा गा इत्यादिभिः शब्दैस्तत्तत्संख्या लक्ष्यते। ततश्चा-

---

(टि॰) १ सा गुरुसंख्या, वेदितव्या, येन यावद्भिः अक्षरैः लां लघूनां मात्राणां, समाः समसङ्ख्याः, ग्लः न स्युः, अपितु न्यूनसङ्ख्या एव। ग्लः इति अक्षराणि अभिधीयन्ते, तेषां गुरुलघुरूपत्वात्। अयम् अभिप्रायः, आर्यादिषु शास्त्रे यावत्यः मात्राः उपदिष्टाः तावन्ति अक्षराणि यथासङ्ख्यं न पूर्य्यन्ते, सा तत्र गुरुसंख्या वेदितव्या, अवशिष्टा लघुसंख्या। तत्रायम् उपयोगः कदाचित् पृच्छति चत्वारिंशदक्षरायाम् आर्य्यायां कति गुरवः सम्पद्यन्ते, कति वा लघव ? इति तदा सप्तपञ्चाशन्मात्रोपदिष्टायाम् आर्य्यायां मात्रासंख्यायां चत्वारिंशदक्षरसंख्याम् अपनीय तत्र ये अवशिष्यन्ते, तान् गुरून् उपदिशेत्। ते च सप्तदश शेषान् तु त्रयोविंशतिलघून् उपदिशेत्।

यमर्थः।यदि वृत्तस्य मात्रावर्णयोः संख्या विज्ञाता गुरुलघुसंख्या चाज्ञाता तदा मात्रासंख्यातो वर्णसंख्यामपनीयाऽवशिष्टा गुरुसंख्या ज्ञेयेति, वर्णसंख्यातश्च गुरुसंख्यामपनीयाऽवशिष्टा लघुसंख्या ज्ञेयेत्याशयः।यदि तु मात्राणां गुरूणां च ज्ञातसंख्यात्वं वर्णाश्चाज्ञातसंख्यास्तदा तज्ज्ञानोपायमाह वर्णा इति तथा वृत्तमात्रा गुरुभिर्विना वर्णा ज्ञेयाः।वृत्तमात्रा संख्यातो गुरुसंख्यामपनीयाऽवशिष्टा वर्णसंख्येत्यर्थः। वृत्तमात्रालघुसंख्यायाः संज्ञाने सति गुरुज्ञाने प्रकारान्तरमाह। गुरव इति। वृत्तस्य ला इत्यनुषङ्गः। वृत्तस्य मात्रा लैः लघुभिर्विना कृता दले अर्धे कृते सति गुरवो ज्ञेयाः। वृत्तमात्रासंख्यातो लघुसंख्यामपनीयाऽवशिष्टां संख्यामर्द्धीकृत्य तावत्प्रमाणा गुरुसंख्येत्यर्थः। उक्तां गुर्वादिसंख्यामुपसंहरति नित्यमिति। इत्यमुना प्रकारेण गुर्वादीनां प्रमाणं नित्यं सर्वदा निश्चितं भवतीति शेषः॥ यथाऽत्रैव वृत्तस्येत्यादि प्रथमपादे मात्रासंख्याः चतुर्दश (१४) वर्णसंख्या अष्टौ (८) तया भागे दत्ते [१४/८] शिष्टा षट् (६) तत्संख्याका एवाऽत्र गुरवो गणनीयाः। तथा पुनरत्रैव वृत्तमात्रा संख्या (१४) गुरुसंख्या षट् (६) तया भक्ते [१४/६] शिष्टा अष्टौ (८) तत्संख्याका एवात्र पादे वर्णाः सन्ति। पुनरत्रैव वृत्तसंख्या (१४) लघु संख्या द्वे (२) तथा शेषिते [१४/२] जाता द्वादश (१२) पुनः अर्द्धीकरणे शिष्टाः (६) तथा च तत्संख्याका (६) एवात्र गुरवः सन्ति "साग्येन न समा लां ग्लः" इति चात्र पि० सू०।४।५३॥ उपलक्षणमात्रम्॥९॥

## भाषार्थः--

**वृत्तस्येति** अब इस श्लोक से वृत्त में गुरु लघु तथा वर्णों के संख्या-विज्ञान की रीति बताते हैं, वृत्त के ल अर्थात् मात्रासंख्या में से वर्णसंख्या को घटा दो, जितनी संख्या बाकी बचे उस पाद में उतने ही गुरु जानने, वृत्त की मात्रासंख्या में से गुरु संख्या को घटा दो जितने बचें उतने उसमें वर्ण होते हैं, अब गुरुसंख्या ज्ञान का दूसरा प्रकार बतलाता है। कि वृत्त की मात्रासंख्याओं में से लघुसंख्या घटा दो जो बाकी बचे उसका फिर आधा करो, जितने शेष रहें उसमें उतने ही गुरु जानने। परन्तु

इनमें गुरुसंख्याविज्ञान में मात्रासंख्या और वर्णसंख्या का, तथा वर्णसंख्याज्ञान में मात्रा-संख्या और गुरुसंख्या का ज्ञान प्रथम अवश्य होना चाहिये। **नित्य**मिति-इस प्रकार इन गुर्वादिकों का प्रमाण निश्चय से है। जैसे इसी "वृत्तस्य" श्लोक में मात्रासंख्या १४ में से वर्णसंख्या ८ को घटा दो तो बाकी जो संख्या बचे उतने ही अर्थात् ६ गुरु होंगे। मात्रासंख्या १४ में से गुरुसंख्या ६ को घटा दो तो बाकी जो बचे उतनेही अर्थात् आठ वर्ण होते हैं। ( गुरुज्ञान का दूसरा प्रकार ) तथा मात्रासंख्या १४ में से लघुसंख्या दो को घटा दो जो बाकी बचे १२ उन का आधा करो तो जितने हुवे उतने ही अर्थात् छः (६) गुरु होते हैं। ऐसे ही अन्यत्र ज्ञान कर लेना चाहिये ॥६॥

इति मात्रासमप्रकरणम्  **अथ शिखाप्रकरणम्**

**शिखिगुणितदशलघुरचितमपगतलघुयुगलमपरमिदमखिलम्॥ सगुरु शकलयुगलकमपि सुपरिघटितललितपदविततिभवति ।शिखा ।१। विनिमयविहितशकलयुगललघुललितपदविततिरचितगुणनिचया । श्रुतिसुखकृदियमपि जगति जशिर उपगतवति सति भवति खजा॥२**

**अष्टावर्द्धे गा द्व्यभ्यस्ता यस्याः साऽनङ्गक्रीडोक्ता ॥**

**दलमपरमपि वसुगुणितसलिलनिधि**

**लघुकविरचितपदविततिभवति ॥३॥**

**त्रिगुणनवलघुरवसितिगुरुरिति**

**दलयुगकृततनुरतिरुचिरा ॥४॥**

इति भट्टकेदाररचिते वृत्तरत्नाकरे द्वितीयोध्यायः

**चूलिकैकोनत्रिंशदेकत्रिंशदन्ते ग्**। ४। ५२। पि० सू०

---

(टि०) यत्र प्रथमेऽर्द्धे एकोनत्रिंशत् लघुरूपा मात्राः। द्वितीयेऽर्द्धे चैकत्रिंशत् तयोश्चान्तयोः स्थितौ द्वौ लकारावुन्मूल्य प्रत्येकम् एको गुरुः क्रियते सा चूलिका नामेत्यर्थः।

समन्वयः {ल० गु० / २८ ऽ}

शिखिगुणितदशलघुरचितमपगतलघुयुगलमपरमिदमखिलम्॥ {गु०१ / ऽ}
३०ल०
सगुरु शकलयुगलकमपि सुपरिघटितललितपदनिचिति भवति शिखा

शिखीति। शिखी अग्निः अत्र त्रित्वसंख्या ३ तेन लक्ष्यते एवञ्च शिखिभिस्त्रिभिर्गुणिता ये दशलघवस्तैस्त्रिंशल्लघुभिरित्यर्थः रचितं निर्मितं यत्तत्। अथ च अपगतं लघुयुगलं लघुद्वयं यस्मात्तत्। एवं प्रथमं दलं। तथाऽपरं द्वितीयं दलमुक्तमखिलं सम्पूर्णं लघुद्वयेनाऽन्यूनं त्रिंशन्मात्राकमित्यर्थः तथा शकलयुगलकमपि दलद्वयमपि सगुरु अन्तेऽधिकैकगुरुयुक्तम्॥ कोऽर्थः प्रथमे दलेऽष्टाविंशतिलघवः अन्ते गुरुश्च द्वितीये च त्रिंशल्लघवः अन्ते गुरुश्चेति एवं दलद्वये द्विषष्टिलघव इत्यर्थः। तथा सुपरिघटितानि शोभनप्रकारेण बद्धानि ललितानि मनोज्ञानि यानि पदानि तेषां निचितिः रचना यस्मिंस्तच्छिखा नाम छन्दो भवति। पिङ्गलमुनिना तु शिखेत्युपक्रम्य "चूलिकैकोनत्रिंशदेकत्रिंशदन्ते ग् ४। ५२। इति सूत्रे चूलिका शिखानाम्नोक्ता ॥१॥

समन्वयः

अन्वयः—

शिखिगुणितदशलघुरचितम् अपगतलघुयुगलम् (प्रथमम्) अपरम् इदमखिलम्, शकलयुगलकमपि सगुरु, सुपरिघटितललितपदनिचितिः शिखा भवति ॥१॥

भाषार्थः—

शिखीति 'शिखी' अग्नि संख्या तीन से गुणे हुवे दश लघु अर्थात् तीस लघुओं में रचित तथा दो लघु जिसमें से कम कर दिये जायें, अर्थात् दो कम तीस (अठाईस) में जिसका प्रथम पाद रचित हो, द्वितीयपाद सम्पूर्ण यही हो अर्थात् तीस लघु वाला हो, दोनों शकल (खण्ड) अन्त में एक २ गुरु से युक्त हों। तथा सुन्दर रीति से जिसमें ललित (मनोहर) २ पदों की रचना हो, ऐसा शिखा नामक छन्द होता है ॥ परन्तु पिङ्गल मुनि ने इसका नाम सूत्र में चूलिकाशिखा लिखा है ॥१॥

समन्वयः ३०ल० गु०

ऽ

विनिमयविहितशकलयुगललघुललितपदविततिरचितगणनिचया।

२८ल० गु०

ऽ

श्रुतिसुखकृदियमपि जगति ञि जशिर उपगतवति सति भवति खजा।

विनिमयेति विनिमयेन वैपरीत्येन विहितं यत्सकलयुगलं तस्य-ये लघवस्तैर्ललिता या पदविततिः पदश्रेणिस्तया रचिता निबद्धा ग(गु)-णनिचया ग(गु)णसमूहा यस्यां स श्रुत्योः कर्णयोः सुखं करोतीति श्रुतिसुखकृत् ञि ञकारे जकारस्य शिरसि उपरि उपगतवति सति खजा नाम अर्थात् खञ्जानामकं छन्दो भवतीत्यर्थः ॥२॥

अन्वयः--

विनिमयविहितशकलयुगललघुललितपदविततिविरचितग(गु)-णनिचया श्रुतिसुखकृत् ञि जशिर उपगतवति सति इयं खजा भवति।२।

भाषार्थः--

विनीति--जिसमें शिखा के दोनों अर्धों को विनिमय (अदल बदल) कर अर्थात् प्रथम दल ३० लघु वाला तथा द्वितीय २८ लघु वाला और दोनों के अन्त में एक २ गुरुयुक्त कर रक्खे जावें, तथा उनके लघुओं से ललित (मनोहर) पदों की श्रेणी से जिसके ग(गु)ण समूह को अनुबद्ध किया जाय, वह कानों को (सुनने मात्र से) सुख प्रदान करने वाला ञकार को जकार के सिर पर चले जाने पर खजा नाम का अर्थात् खञ्जा नाम का छन्द होता है। (खजा के जकार से ऊपर ञकार को युक्त कर दो तो खजा का खञ्जा बन ही जाता है) ॥२॥

"शिखा विपर्यस्तार्द्धा" ४।४२ "ल पूर्वश्चेज्ज्योतिः ४।५० "गश्चेत्सौम्या" इति पि० सू० ४।५१।

---

(टि०) १ गीत्यायां चेत् विपर्यस्तार्द्धा अयमर्थः अर्द्धं च सर्वलघु अर्द्धं च सर्वगुरु इति तदा शिखाख्यां लभते, तत्र यदि पूर्वोऽर्द्धो भागः लः सर्व (३२) लघुरूपः परिशेषात् उत्तरश्च सर्व (१६) गुरुः तदा ज्योतिर्नाम शिखा यदि पूर्वभागः गः सर्वगुरुरूपः तदा सौम्या नाम शिखेति विन्यासभेदेन नामद्वयं शिखाया एवेति सूत्रत्रयार्थः।

समन्वयः १६ गु०

अष्टावर्धे गा द्व्यभ्यस्ता यस्याः साऽनङ्गक्रीडोक्ता ॥
३२ ल०
दलमपरमपि वसुगुणितसलिलनिधिलघुकविरचितपदविततिं भवति ॥

अष्टाविति ॥ यस्या अर्धे प्रथमदले द्व्यभ्यस्ता द्विगुणिताः अष्टौ गा गुरवः षोडश गुरव एव स्युरित्यर्थः । तथाऽपरं द्वितीयमपि दलं वसुभिरष्टभिर्गुणिताः सलिलनिधयश्चत्वारो लघवो यस्मिन् तेन समुदायेन कविभी रचिता पदविततिः पदश्रेणिर्यस्य तत्। अर्थात् पूर्वार्धे षोडशगुरव उत्तरार्द्धे द्वात्रिंशल्लघवः कार्या इति। सा अनङ्गक्रीडा नाम छन्दो भवति समस्तोऽयं श्लोकः। "गश्चेत् सौम्या" इति 'लः पूर्वश्चेज्ज्योतिः" इति पि० सूत्रे तु विन्यासभेदेन शिखाद्वैविध्ये नामान्तरेणोक्तिः ॥३॥

अन्वयः--

यस्या अर्धे द्व्यभ्यस्ता अष्टौ गाः अपरमपि दलं वसुगुणितसलिलनिधिलघुकविरचितपदविततिं, सा अनङ्गक्रीडा उक्ता ।३॥

भाषार्थः—

अष्टाविति—जिसके प्रथमार्ध में दो से गुणे हुए आठ अर्थात् सोलह गुरु हों तथा द्वितीयार्ध में 'वसु' आठ से गुणे हुवे 'सलिलनिधि' चार अर्थात् बत्तीस लघुओं से पदों की श्रेणी विरचित की हो तो अनङ्गक्रीडा नामक छन्द होता है ॥३॥

समन्वयः ल०२७ गु०१
ऽ

त्रिगुणनवलघुरवसितिगुरुरिति दलयुगकृततनुरिह रुचिरा ॥४॥[1]

इति मात्राप्रकरणम्

त्रयो गुणा आवृत्तयो येषान्ते नवलघवो यस्याः सा त्रिगुणनवलघुः सप्तविंशतिलघुकम् इत्यर्थः अवसितौ अवसाने गुरुर्यस्याः सा

(टि०) १ पैङ्गले तु चूलिकापूर्वार्द्धतुल्यमुत्तरार्द्धं विधायैषा निबद्धा तद्भेदविशेषः।

अवसितिगुरुः इत्येवं दलयुगेन खण्डयुग्मेन कृता तनुर्यस्याः सा दल-युगकृततनुः रुचिरेति नाम छन्दः ॥४॥

इति वृत्तरत्नाकराख्यछन्दो ग्रन्थस्य रत्नसंग्रहटीकायां मात्रा-प्रकरणवृत्तौ द्वितीयोऽध्यायः ॥२॥

**अन्वयः--**

त्रिगुणनवलघुः, अवसितिगुरुः, इति दलयुगकृततनुः इह रुचिरा भवति ॥४॥

**भाषार्थः--**

त्रीति—जिसमें तीन बार आवृत्त किये ( तीन से गुणे ) हुए नौ लघु अर्थात् सत्ताईस लघु हों, तथा अवसान (अन्त) में एक गुरु हो इसी प्रकार दोनों दलों का तनु शरीर अर्थात् बन्ध हो तो रुचिरा नामक छन्द होता है ॥४॥

इति मात्राप्रकरणम्

इति वृत्तरत्नाकरस्य रत्नसंग्रहे भाषाप्रभाकरस्य द्वितीयोऽध्यायः ।



अथेदानीं समवृत्ताध्यायमुपक्रमते।

गश्री॥ गौ स्त्री॥ मो नारी॥ रो मृगी॥ म्गौ चेत्कन्या॥ भ्गौ गिति पङ्क्तिः॥ त्यौ स्तस्तनुमध्या शशिवदना न्यौ॥ त्सौ चेद्वसुमती॥

समन्वयः

ऽ
(उक्तायाम्) ग्श्रीः ॥१॥

(उक्तायां १ जातौ) गिति अत्रोत्तरत्र च यत्रान्वयो न स्यात् तत्र यदि तदेति प्रायोऽध्याहारः। यदि ग्. गुरुर्वर्णः पादे २ एकैको भवति तदा श्रीः नाम छन्दो भवति ॥१॥

अन्वयः--

यदि ग्, तदा श्रीः छन्दो भवतीत्यध्याहार्यम्।

भाषार्थः—

गिति यदि चारों पादों में केवल १-१ गुरु हो तो उसे श्री नाम छन्द कहते हैं।

समन्वयः

ऽ ऽ
(अत्युक्तायाम) गौ स्त्री ॥२॥

(अत्युक्तायाम् २ जातौ) गाविति यदि पादे पादे गौ द्वौ २ गुरू भवतस्तदा स्त्री नाम छन्दो भवति ॥२॥

अन्वयः--

यदि गौ तदा स्त्री छन्दो भवतीत्यध्याहारः।

भाषार्थः--

गाविति यदि चारों पादों में केवल दो २ गुरु ही हों तो उसे स्त्री नाम छन्द कहते हैं।

समन्वयः मगणः

ऽ ऽ ऽ
(मध्यायाम्) मो नारी ॥३॥

( मध्यायां ३ जातौ ) म इति यदि पादे पादे एकैको मो मगणो भवति तदा नारी नाम छन्दो ज्ञेयः ॥

अन्वयः—

यदि मः तदा नारी छन्दो भवति इति शेषः ।

भाषार्थः

म इति यदि चारों पादों में केवल तीन गुरु वाला १—१ मगण हो तो नारी नामक छन्द होता है ।

समन्वयः रगणः

ऽ ऽ ऽ

रो मृगी ॥३॥

र इति यदि रो रगणो भवेत् तदा मृगी नाम छन्दः स्यात् ॥३॥ ( य केसा[1] )

अन्वयः—

यदि रः तदा मृगी छन्दो भवति इति शेषः ।

भाषार्थः—

र इति यदि चारों पादों में केवल मध्यलघुरूप १—१ रगण ही हो तो उसका नाम मृगी छन्द होता है ।

समन्वयः म० गु० १

ऽ ऽ ऽ ऽ

(प्रतिष्ठायाम्) म्गौ चेत् कन्या ॥४॥

एवं यावन्तः छन्दोभेदा भवन्ति तावन्त एवमवतार्याः (प्रतिष्ठायाम् (४) जातौ म्गाविति चेत् यदि प्रतिपादं म्गौ मगण-गुरू भवतस्तदा कन्या नाम छन्दो भवति ॥ ननु एतासां प्रतिष्ठान्तानां सूत्रानुक्तत्वाद-प्रामाण्यमिति चेन्न "द्विकौ ग्लौ" ८।२० "परे पूर्णम्" ८।३४। इति रूपप्रस्तारकथने प्रदर्शितत्वात् ( यगौ व्रीडा ॥ ज्ग लासिनी । भ्गौ सुमुखी ॥ सुमतिः स्गौ ॥ गौं समृद्धिः ) ॥३॥

---

(टि०) १ एवमग्रे टीकायां स्थूलाक्षरैः पुस्तकान्तरोपलब्धानि छन्दांसि धृतानि ज्ञेयानि ॥

**अन्वयः—**

चेत् म्गौ कन्या छन्दो भवति।

**भाषार्थः—**

**म्गाविति** यदि चारों पादों में एक २ मगण तथा एक २ गुरु हो अर्थात् चारों अक्षर गुरु ही हों तो उसे कन्या छन्द कहते हैं।

**समन्वयः** भ० गु० गु०
S I I S S

**(सुप्रतिष्ठायाम्) भ्गौ गिति पङ्क्तिः।५॥**

(सुप्रतिष्ठायां ५ जातौ) भ्गाविति यदि भ्गौ भगणो द्वौ गुरू च भवतः तदा पङ्क्तिर्नाम छन्दो भवति। अन्यत्राधिक्यम् (गौं गिति प्रीतिः.. सती जगौ गः॥ मन्दा तलगैः) ॥५॥

**अन्वयः—**

यदि भ्गौ ग् इति च तदा पङ्क्तिः छन्दो भवति।

**भाषार्थः--**

**भ्गाविति** यदि चारों पादों में एक २ भगण तथा दो २ गुरु हों तो उस का नाम पङ्क्ति होता है॥

**"तनुमध्या त्यौ"** ६।२ इति पि० सू०।

**समन्वयः** त० य०
S S I-I S S

**(गायत्र्याम्) त्यौ स्तस्तनुमध्या ॥६॥**

(गायत्र्याम् ६ जातौ) त्याविति यदि पादे पादे त्यौ तगण यगणौ स्तः भवतस्तदा तनुमध्या नाम छन्दो भवति॥

**अन्वयः—**

यदि त्यौ स्तः तदा तनुमध्या छन्दो भवति।

**भाषार्थः—**

**त्याविति** यदि चारों पादों में एक २ तगण तथा एक २ यगण होवे तो उसे तनुमध्या छन्द कहते हैं।

समन्वयः
न० य०
। । ।-। ऽ ऽ

शशिवदना न्यौ ॥७॥

शशीति यदि न्यौ नगण-यगणौ स्यातां तदा शशिवदना ॥

अन्वयः--
यदि न्यौ तदा शशिवदना भवति ।

भाषार्थः—

शशीति जिसके चारों पादों में एक २ नगण तथा एक २ यगण हो उसे शशिवदना कहते हैं ।

समन्वयः
त० स०
ऽ ऽ । -। । ऽ

त्सौ चेद्वसुमती ॥८॥

त्साविति चेद्यदि त्सौ तगण-सगणौ भवतस्तदा वसुमती नाम उक्तेति । एतदन्तं पादान्ते एव यतिरित्याम्नायः (विद्युल्लेखा मो मः । मौ सावित्रीमाहुः । म्रौ यस्याः सा नदी ॥ म्सौ प्रोक्तं मुकुलम् ॥ मालिनी मभ्यां स्यात् ॥ सयुगं रमणी ॥ स्याद्रौ स्रग्विणी । ययौ सोमराजी । स्यान्म्सौ सोमकुलम् । कामलतिका म्यौ ॥ सूत्रचतुष्टयमेतत्सेतुटीकाटिप्पिण्याम् ॥

अन्वयः--
चेत् त्सौ तदा वसुमती भवति ।

भाषार्थः--

त्साविति यदि चारों पादों में एक २ तगण और एक २ सगण हो तो उसका नाम वसुमती होता है ।

---

मूलम्

मधु यदि ननगाः ॥ कुमारललिता ज्सौ ग् ॥ म्सौ गः स्यान्मदलेखा ॥

---

समन्वयः न० न० गु०

। । ।-। । ।-ऽ

(उष्णिहि) मधु यदि ननगाः ॥१॥

(उष्णिहि ७ जातौ) मध्विति यदि ननगाः द्वौ नगणौ एको गुरुश्च भवति तदा मधुसञ्ज्ञं छन्दो भवति ॥७॥

अन्वयः —

यदि ननगाः तदा मधु छन्दो भवति।

भाषार्थः—

मधु इति यदि दो नगण और एक गुरु हो तो मधु छन्द होता है।

"कुमारललिता ज्सौ ग्" इति पि० सू० ६।३॥

समन्वयः ज० स० गु०

। ऽ । । । ऽ- ऽ

कुमार ललिता ज्सौ ग् ॥२॥

कुमारेति ज्सौ जगण-सगणौ ग् गुरुश्च चेत्तदा कुमारललिता।

अन्वयः—

यदि ज्सौ ग् तदा कुमारललिता भवति।

भाषार्थः—

कुमारेति यदि एक पाद में १ जगण १ सगण और एक गुरु हो तो कुमारललिता छन्द होता है॥

समन्वयः

म० स० गु०

ऽ ऽ ऽ । । ऽ ऽ

म्सौ गः स्यान्मदलेखा ॥३॥

म्साविति यदा म्सौ मगण-सगणौ गः गुरुश्च भवेत् तदा मदलेखा। पदान्ते यतिः। (सरगैर्हंसमाला। मधुमति ननगाः चूडामणिस्तभगात्॥ (क्वचित्) मधुमती नभगाः) ॥७॥

अन्वयः--

यदा म्सौ गः तदा मद्लेखा स्यात् ।

भाषार्थः--

म्साविति यदि एक मगण एक सगण और एक गुरु हों तो मदलेखा नामक छन्द होता है ।

—:०:—

मूलम्

भौ गिति चित्रपदा गः ॥ मो मो गो गो विद्युन्माला ॥ माणवकं भात्तलगाः ॥ म्नौ गौ हंसरुतमेतत् जौ समानिका गलौ च ॥ प्रमाणिका जरौ लगौ ॥ वितानमाभ्यां यदन्यत् ॥

"चित्रपद भौ गौ" इति पिं० सू० ६ । ५ ॥

समन्वयः भ० भ० गु०

ऽ । ।- ऽ । ।-ऽ ऽ

(अनुष्टभि) भौ गिति चित्रपदा गः ॥१॥

(अनुष्टुभि ८ जातौ) भाविति यदा भौ द्वौ भगणौ ग् गः गुरुद्वयं च भवति तदा चित्रपदा नाम छन्दो भवति । पादान्ते यतिः ॥८॥

अन्वयः--

यदा भौ ग् गः तदा चित्रपदा भवति ।

भाषार्थः--

भाविति जिसमें दो भगण तथा दो गुरु हों उसे चित्रपदा कहते हैं ।

"विद्युन्माला मौ गौ" इति पि० सू० ६ । ६ ।

समन्वयः म० म गु०२

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

मो मो गो गो विद्युन्माला ॥२॥

म इति यदा मो मो द्वौ मगणौ गो गो द्वौ गुरू च स्यातां तदा विद्युन्माला नाम छन्दः । चतुर्भिर्यतिरत्र ॥

अन्वयः--

यदा मो मो गो गः तदा विद्युन्माला भवति ।

भाषार्थः--

म इति जिसमें दो मगण तथा दो गुरु हों उसे विद्युन्माला कहते हैं ।

"माणवकक्रीडितकं भ्तौ ल्गौ" इति पि० सू० ६ । ७ ॥

समन्वयः भ० त० ल०गु०

S I I-S S I-I S

माणवकं भात्तलगाः ॥३॥

माणवकमिति यदि भात् भगणात् परे तलगाः तगण लघु गुरवो भवन्ति तदा माणवकं नाम छन्दः । चतुर्भिः २ यतिः ॥

अन्वयः--

यदि भात् तलगाः तदा माणवकं भवति ।

भाषार्थः--

माणवेति जिसमें भगण से परे तगण एक लघु और एक गुरु हों उसे माणवक कहते हैं ।

"हंसरुतं म्नौ गौ" इति प्रा० पि० सू० ६ । ८ ॥

समन्वयः म० न० गु०२

S S S I I I-S-S

म्नौ गौ हंसरुतमेतत् ॥४॥

म्नाविति यदि म्नौ मगण-नगणौ गौ द्वौ गुरू च चेत्तत् हंसरुतं नाम छन्द ॥

अन्वय.--

यदि म्नौ गौ एतत् हंसरुतं छन्दो भवति ।

भाषार्थः -

म्नाविति जिसमें एक मगण एक नगण और दो गुरु हों उसका नाम हंसरुत है।

समन्वयः र० ज० गु०ल०

ऽ।ऽ-।ऽ।ऽ-।

जौं समानिका गलौ च ॥५॥

जौविति यदि जौं रगण जगणौ गलौ गुरु-लघू च भवतस्तदा समानिका नाम छन्दः ॥

अन्वयः--

यदा जौं गलौ च तदा समानिका भवति।

भाषार्थः—

जौविति जिसमें एक रगण एक जगण एक गुरु और एक लघु हो उसे समानिका कहते हैं।

समन्वयः ज० र० गु०ल०

।ऽ।-ऽ।ऽ—।-ऽ

प्रमाणिका जरौ लगौ॥६॥

प्रमाणकेति यदा जरौ जगण-रगणौ लगौ लघु-गुरू च तदा प्रमाणिका नाम छन्दः।नगस्वरूपिणीत्यस्या नामान्तरं श्रुतबोधादौ तद्यथा

'द्वितुर्यषष्ठमष्टमं गुरु प्रयोजितं यदा।
तदा निवेदयन्ति तां बुधा नगस्वरूपिणीम्' ॥

अन्वयः –

यदा जरौ लगौ तदा प्रमाणिका भवति।

भाषार्थः –

प्रमेति जिसमें जगण रगण लघु और एक गुरु हों उसे प्रमाणिका कहते हैं।

"वितानमन्यत्" इति पि० सू० ५।८॥

समन्वयः ज० त० गु०

।ऽ।-ऽ ऽ।ऽ-ऽ

वितानमाभ्यां यदन्यत् ॥७॥

वितानमिति आभ्यां समानिका-प्रमाणिकाभ्यां यदन्यदनुष्टुब्जातीयं छन्दः तद्वितानं नाम भवति। तत्र च केचिद्बहुधा नियमं विदधति। परन्तु सूत्रकृताऽनुक्तत्वान्न तत्प्रमाणयामः॥ "वितानमन्यत्" इति सामान्यत एव तत्सूत्रम्। यतिः पादान्ते अनियता वा।

(नाराचिका तरौ लगौ॥ नागरकं भरौ लगौ॥ *[1] जौ जगौ च सिंहलेखा॥८॥

अन्वयः—

आभ्यां यत् अन्यत् तत् वितानं भवति।

भावार्थः -

वितानमिति इन समानिका तथा प्रमाणिका छन्द से जो अन्य अवशिष्ट हो उसे वितान कहते हैं।

—०—

मूलम्

रान्नसाविह हलमुखी॥ भुजगशिशुभृता नौ मः॥

—०—

"हलमुखी नौं स्" इति पि० सू० ६।६॥

र० न० स०

समन्वयः ऽ।ऽ।।।।।।ऽ

(बृ·त्यां) रान्नसाविह हलमुखी॥ १॥

अथ बृहत्यां (९) जातौ इहास्मिन् शास्त्रे यदि रात् रगणात्परौ नसौ नगण-सगणौ भवतस्तदा हलमुखी नाम छन्दः स्यात्। त्रिभिः षड्भिश्च यतिः॥

अन्वयः -

इह यदि रात् नसौ तदा हलमुखी भवति।

---

(टि०) १ एतच्चिन्हचिन्हितमात्रे च सर्वत्र सेतुपुस्तकटिप्पणीतः पाठान्तरं निष्क्रान्तं ज्ञेयम्॥

भाषार्थः—

रादिति यदि रगण से परे नगण और सगण हों तो इस छन्दशास्त्र में उसका नाम हलमुखी कहा है।

"भुजगशिशुभृता नौ म्" इति पि० सू० ६ । ७ ॥

समन्वयः न० न० म०
। । । । । ।-ऽ ऽ ऽ

भुजगशिशुभृता नौ मः ॥२॥

भुजगेति यदि नौ द्वौ नगणौ ततो मो मगणश्च भवति तदा भुजगशिशुभृता नाम छन्दो भवति। सप्तभिर्द्वाभ्यां च यतिः। (भद्रिकेति रनरैरियम् ॥ भमसैर्युक्ता रुक्मवती (मणिबन्धः)

अन्वयः —

यदि नौ मः तदा भुजगशिशुभृता भवति।

भाषार्थः —

भुजगेति यदि दो नगणों से परे मगण हो तो उस छन्द का नाम भुजगशिशुभृता होता है।

---

(मूलम्)

म्सौ ज्गौ शुद्धविराडिदं मतम् ॥ म्नौ यगौ चेति पणवनामेदम् ॥ जौं रगौ मयूरसारिणी स्यात् ॥ भ्मौ सगयुक्तौ रुक्मवतीयम् ॥ ज्ञेया मत्ता मभसगयुक्ता ॥ चम्पकमाला चेद्भमसाद्गः ।' नरजगैर्भवेन्मनोरमा ॥ रजौ जो गुरुणेयमुपस्थिता ॥

---

"शुद्धविराण्मसौ जगौ" इति पि० सू० ६ । १०

समन्वयः म० स० ज० गु०

ऽ ऽ ऽ-।। ऽ । ऽ । ऽ ।-ऽ

(पङ्क्तौ) म्सौ ज्गौ शुद्धविराडिदं मतम् ॥१॥

पङ्क्त्यां (१०) जातौ) यदि म्सौ मगण-सगणौ ज्गौ जगण-गुरू च भवतस्तदा शुद्धविराड् इति मतमभिप्रेतम्। पादान्ते यतिः॥

अन्वयः

यदि म्सौ ज्गौ इदं शुद्धविराट् मतम्।

भाषार्थः—

म्साविति यदि मगण सगण और जगण से परे एक गुरु हो तो शुद्धविराट् छन्द होता है।

"पणवो म्नौ य्गौ" इति पि० सू० ६। ११

समन्वयः म० न० य० गु०

ऽ ऽ ऽ-। ।।-। ऽ ऽ-ऽ

म्नौ य्गौ चेति पणवनामेदम् ॥२॥

म्नाविति यदा म्नौ मगण-नगणौ ज्गौ जगण-गुरू च भवतस्तदा पणवनामकं छन्दः। पञ्चभिः २ यतिः।

अन्वयः –

यदि म्नौ य्गौ च इति इदं पणवनाम भवति।

भाषार्थः

म्नाविति यदि मगण नगण और यगण से परे १ गुरु हो तो वह पणव नाम छन्द होता है।

"मयूरसारिणी जौं गौं" इति पि० सू० ६। १२

समन्वयः र० ज० र० गु०

ऽ ।ऽ ।ऽ। ऽ। ऽ ऽ

जौं रगौ मयूरसारिणी स्यात् ॥३॥

जौविति यदि जौं रगण-जगणौ रगौ रगण-गुरू च भवतस्तदा मयूरसारिणी नाम छन्दः स्यात्। पादान्ते यतिः॥

अन्वयः

यदि जौं रगौ तदा मयूरसारिणी स्यात्।

भाषार्थः

जौविति यदि रगण जगण रगण और गुरु हों तो उसे मयूरसारिणी छन्द कहते हैं।

"रुक्मवती भ्मौ स्गौ" इति पि० सू० ६। १२॥

समन्वयः भ० म० स० गु०

S I I-S S S-I I S S

भ्मौ सगयुक्तौ रुक्मवतीयम् ॥४॥

भ्माविति यदि भ्मौ भगण-मगणौ सगाभ्यां सगण-गुरुभ्यां युक्तौ भवतस्तदा इयं रुक्मवती नाम छन्दो भवति। पादान्ते यतिः॥

अन्वयः—

यदि भ्मौ सगयुक्तौ इयं रुक्मवती भवति।

भाषार्थः—

भ्माविति जिसमें भगण मगण सगण और एक गुरु हों उसे रुक्मवती छन्द कहते हैं।

"मत्ता भ्मौ स्गौ" इति पि सू० ६। १४॥

समन्वयः म० भ० स० गु०

S S S-S I I-I I S-S

ज्ञेया मत्ता मभसगयुक्ता ॥५॥

ज्ञेयेति यदा मभसगैः मगण-भगण-सगण-गुरुभिर्युक्ता भवति तदा मत्ता ज्ञेया। चतुर्भिः षड्भिश्च यतिः॥

अन्वयः—

मभसगयुक्ता मत्ता ज्ञेया।

भाषार्थः—

ज्ञेयेति जिसमें मगण-भगण-सगण और गुरु हों उसे मत्ता छन्द कहते हैं।

समन्वयः भ० म० स० गु०

S ।।-S S S-।। S--S

चम्पकमाला चेद्भमसाद्गः ॥६॥

चम्पकेति चेद्यदि भमसाद् भगण-मगण सगणात् गो गुरुर्भवति तदा चम्पकमाला नाम छन्दः स्यात्। पञ्चभिः २ यतिः ॥ इयं (६।१२) सूत्रोक्ता ( पृ० ७५ प०८ ) रुक्मवत्येव यतिभेदेन भिन्नतयोपन्यस्ता। तदुक्तं श्रुतबोधे

तन्वि! गुरु स्यादाद्यचतुर्थं पञ्चमषष्ठं चान्त्यमुपान्त्यम्।
इन्द्रियवाणैर्यत्र विरामः सा कथनीया चम्पकमाला॥

अन्वयः—

चेत् भमसात् गः तदा चम्पकमाला भवति।

भाषार्थः—

चम्पेति यदि भगण-मगण और सगण से परे एक गुरु हो तो उसे चम्पकमाला कहते हैं।

समन्वयः न० र० ज०गु०

।।।S।S-।S।-S

नरजगैर्भवेन्मनोरमा ॥७॥

नेति यदि नरजगैः नगण-रगण-जगण-गुरुभिः रचिता भवेत्तदा मनोरमा नाम छन्दो भवति। अत्राऽपि पादान्ते एव यतिः ॥१०॥

अन्वयः—

नरजगैः मनोरमा भवेत्।

भाषार्थः—

नरेति जिसमें नगण रगण जगण और एक गुरु हो उसे मनोरमा कहते हैं।

"उपस्थिता त्जौ ज्गौ" ६। ५ इति पि०सू०

समन्वयः त० ज० ज० गु०
ऽ ऽ ।--। ऽ ।--। ऽ । -ऽ-

त्जौ जो गुरुणेयमुपस्थिता ॥८॥

त्जाविति त्जौ तगण-जगणौ जो जगणश्च गुरुणा सह स्युः तदेयमुपस्थिता उक्ता मुनिना। पादे यतिः २+८ इत्येके (दीपकमाला चेद्भमौ जगौ ॥ ज्ञेया हंसी मभनगयुक्ता ॥ त्रिसगा अपि मेघवितानम्। रश्च सौ सगुरुर्मणिरागः ॥

अन्वयः—

यदि त्जौ जो गुरुणा तदा उपस्थिता भवति।

भावार्थः—

त्जाविति जिसमें एक तगण दो जगण और एक गुरु हो उसे उपस्थिता कहते हैं

—•—

(मूलम्)

स्यादिन्द्रवज्रा यदि तौ जगौ गः।उपेन्द्रवज्रा जतजास्ततो गौ अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः। इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम ॥

सान्द्रपदं भ्तौ नगलघुभिश्च।नजजलगैर्गदिता सुमुखी ॥ दोधकवृत्तमिदं भभभाद्गौ ॥ शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः॥वातोर्मीयं कथिता म्भौ तगौ गः॥ पञ्चरसैः श्रीर्भतनगगैः॥ म्भौ न्लौ गः स्याद्भ्रमरविलसितम्। रान्नराविह रथोद्धता लगौ॥ स्वागतेति रनभाद्गुरुयुग्मम्।

ननसगगुरुरचिता वृत्ता ॥ ननरलगुरुभिश्च भाद्रिका ॥
श्येनिका रजौ रलौ गुरुर्यदा । मौक्तिकमाला यदि
भतनाद्गौ ॥ उपस्थितमिदं ज्सौ ताद्गकारौ ॥

—:o:—

"इन्द्रवज्रा तौ ज्गौ ग्" ६ । १६ इति पि० सू०

समन्वयः त० त० ज० गु०गु०

ऽ ऽ।–ऽ ऽ ।–। ऽ ।–ऽ–ऽ

(त्रिष्टुभि) स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥१॥

(त्रिष्टुभि(१)जातौ) स्यादिति यदि तौ द्वौ तगणौ ज्गौ जगण-गुरू गो गुरुश्च भवति तदा इन्द्रवज्रा नाम छन्दः स्यात् । ५ । ६ यतिः ॥

अन्वयः —

यदि तौ जगौ गः तदा इन्द्रवज्रा स्यात् ।

भाषार्थः—

स्यादिति यदि दो तगण एक जगण और दो गुरु हों तो इन्द्रवज्रा नामक छन्द होता है ।

"उपेन्द्रवज्रा ज्तौ ज्गौ ग्" ६ । १७ इति पि० सू०

समन्वयः ज० त० ज० गु०

। ऽ ।–ऽ ऽ ।–। ऽ ।–ऽ ऽ

उपेन्द्रवज्रा जतजास्ततो गौ ॥२॥

उपेन्द्रेति यदि जतजा जगण-तगण जगणास्ततोऽग्रतो गौ द्वौ गुरू भवतस्तदा उपेन्द्रवज्रा नाम छन्दो भवति । ५ । ६ यतिः ॥

अन्वयः—

यदि जतजाः ततः गौ तदा उपेद्रवज्रा भवति ।

भाषार्थः—

उपेति यदि जगण तगण और जगण से परे दो गुरु हों तो उपेन्द्रवज्रा नामक छन्द होता है ।

"आद्यन्तावुपजातयः" ६ । १७ इति पि० सू०

समन्वय:

ज० त० ज० गु०२ त० त० ज० गु०२

। ऽ ।--ऽ ऽ । । ऽ ।--ऽ ऽ-- ऽ ऽ ।-ऽ ऽ ।-। ऽ ।-ऽ ऽ

अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥

अनन्तरेति अनन्तरशब्देन पाश्चात्यवृत्तद्वयमिन्द्रवज्रोपेन्द्रवज्राख्यं गृह्यते। यासाम् इमौ यदीयौ पादौ अनन्तरमुदीरिते अनन्तरोदीरिते ते च ते लक्ष्मणी लक्षणे भजतः तौ अनन्तरोदीरितलक्ष्मभाजौ स्यातां (जातौ द्विवचनं नेत्रादीनां द्विष्ठा जातिरिति न्यायात् ) ता उपजातय उपजाति-नामकानि वृत्तानि उच्यन्ते ॥

इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम ॥३॥

इत्थमिति अनेन प्रकारेण अन्यास्वपि जातिषु जगत्यादिषु सर्वासु यथासम्भवं मिश्रितासु मिलितासु सतीषु पूर्वाचार्या इदमेव नाम स्मरन्ति । यथा कुमारसम्भवे "अस्त्युत्तरस्यां दिशि देवतात्मा" "हिमालयो नाम नगाधिराजः" अत्र स्मरन्तीत्यनेन कविप्रयोगानुरोधेन मिश्रणं विवक्षितमिति सूचितम्। परस्परपादमिश्रणे चतुर्दश्या भेदाः तथा चोक्तम् । एकत्र पादे चरणद्वये वा पादत्रये वाऽन्यतरः स्थितश्चेत् । तयोरिहान्यत्र तदोहनीयाश्चतुर्दशोक्ता उपजातिभेदाः ॥

अन्वयः—

यदीयौ पादौ अनन्तरोदीरितलक्ष्मभाजौ स्यातां ता उपजातयो भवन्ति । इत्थं किल अन्यासु अपि जातिषु मिश्रितासु सतीषु इदम् एव नाम स्मरन्ति ।

भाषार्थः—

अनन्तरेति जिसके पादों में पूर्वोक्त इन्द्रवज्रा तथा उपेन्द्रवज्रा के लक्षण मिश्रित हो जाय वह उपजाति छन्द कहलाता है। इस तरह जहां और भी जगत्यादि जातिएं मिली हुई दीख पड़ें वहां भी विद्वान् लोक इसी ( उपजाति ) नाम से स्मरण करते हैं। जैसे रत्नसंग्रह में उदाहरण दिया है। महाकविप्रयोगों के अनुरोध से ही मिश्रण होता है यह "स्मरन्ति" इस पद का अभिप्राय है॥

समन्वयः भ० त० न० गु०ल०

ऽ।।ऽ ऽ ।।।।-ऽ ।

सान्द्रपदं भ्तौ नगलघुभिश्च ॥४॥

सान्द्रेति भ्तौ भगण-तगणौ नगलघुभिः नगण-गुरु-लघुभिश्च युतौ स्यातां तदा सान्द्रपदं नाम छन्दो भवति। पादे यतिः॥

अन्वयः—

यदि भ्तौ नगलघुभिर्युतौ तदा सान्द्रपदं भवति।

भाषार्थः—

सान्द्रेति जिसमें भगण और तगण, नगण-गुरु और लघु से युक्त हों उसे सान्द्रपद वृत्त कहते हैं।

सुमुखी न्जौ ज्लौ ग् ॥ २। इति प्राकृतपैङ्गले सू०

समन्वयः न० ज० ज० ल०गु०

।।।-।ऽ।-।ऽ ।-।-ऽ

नजजलगैर्गदिता सुमुखी ॥५॥

नेति नजजलगैः नगण जगण-जगण-लघु गुरुभि क्लृप्ता सुमुखी नाम कथिता॥

अन्वयः—

नजजलगैः सुमुखी गदिता।

भाषार्थः---

नेति जिसमें एक नगण दो जगण एक लघु और एक गुरु हों उसे सुमुखी छन्द कहते हैं।

"दोधकं भौ भ्गौ ग्" ६। १९ इति पि० सू०

समन्वयः भ० भ० भ० गु०२

ऽ । ।-ऽ । ।-ऽ । ।-ऽ ऽ

दोधकवृत्तमिदं भभभाद्गौ ॥ ६॥

दोधकेति यदि भभभात् भगणत्रयात् गौ द्वौ गुरू भवतस्तदा इदं दोधकं नाम वृत्तं स्यात्। पादान्ते यतिः॥

अन्वयः--

चेत् भभभात् गौ इदं दोधकवृत्तं कथितम्

भाषार्थः--

दोधकेति जिसमें तीन भगणों से परे दो गुरु हों वह दोधक नामक वृत्त होता है।

"शालिनी म्तौ त्गौ समुद्रऋषयः" (४-७यतिः)६।२०इतिपि०सू०

समन्वयः म० त० त० गु०गु०

ऽ ऽ ऽ-ऽ ऽ । -ऽ ऽ । -ऽ ऽ

शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ॥७॥

शालिनीति यदि म्तौ मगण-तगणौ तगौ गः तगणौ द्वौ गुरू च भवतः अथ च अब्धिलोकैः चतुर्भिः सप्तभिश्च अक्षरैर्यतिर्भवति तदा शालिनी नाम उक्ता। अत्र छन्दसि चतुर्वर्णेभ्यः एका यतिः कार्या, ततः सप्तवर्णेभ्यो द्वितीया यतिर्विधेया। परमत्र यदि यतिर्न स्यात्। तदा छन्दोऽप्यलीकम्॥

अन्वयः--

यदि म्तौ तगौ गः, अब्धिलोकैः यतिः तदा शालिनी उक्ता।

**भाषार्थः—**

**शालिनी**ति जिसमें एक मगण दो तगण और दो गुरु हों और चार तथा सात अक्षरों के अन्त में यति (विराम) हो वह शालिनी नामक छन्द होता है।

"वातोर्मी म्भौ त्गौ ग् चतुःस्वरा" ६।२० इति पि० सू०

समन्वयः म० भ० त० गु०गु०

S S S-S । । । S S ।-S---S

**वातोर्मीयं गदिता म्भौ तगौ गः ॥८॥**

**वातोर्मी**ति यदि म्भौ मगण-भगणौ तगौ तगण-गुरू गो गुरुश्च भवति तदा इयं वातोर्मी नाम । ४ । ७ यतिः

**अन्वयः—**

यत्र म्भौ त्गौ गः इयं वातोर्मी गदिता ।

**भाषार्थः—**

**वाते**ति जिसमें मगण भगण तगण और दो गुरु हों । तथा चार और सात अक्षरों के अन्त में यति हो उसे वातोर्मी कहते हैं।

समन्वयः भ० त० न० गु०२

S । । S S । । । ।--S S

**पञ्चरसैः श्रीर्भतनगगैः स्यात् ॥९॥**

**पञ्चे**ति यदि पञ्चरसैः पञ्चभिः षड्भिश्च यतिर्भवति भतनगगैः भगण-तगण-नगणैर्गुरुभ्यां च रचिता भवति तदा श्रीर्नाम छन्दः स्यात् ।५।६ यतिः

**अन्वयः—**

यत्र पञ्चरसैः यतिः, भतनगगैः रचिता श्रीः स्यात् ।

**भाषार्थः—**

**पञ्चे**ति जिसमें पांच और सात अक्षरों के अन्त में यति हो तथा भगण तगण नगण और दो गुरुओं से बना हो उसे श्री छन्द कहते हैं।

"भ्रमरविलसितं म्भौ न्लौ ग्" ६।२१ इति पि० सू०

समन्वयः म० भ० न० ल०गु०

S S S– S । ।–। । ।–। S

म्भौं न्लौ गः स्याद् भ्रमरविलसिता ॥१०।

म्भाविति यदि म्भौ मगण-भगणौ न्लौ नगण-लघू गो गुरुश्चेति भवति तदा भ्रमरविलसिता नाम स्यात्। ४। ७ यतिः

अन्वयः--

यदि म्भौ न्लौ गः तदा भ्रमरविलसिता स्यात्।

भाषार्थः—

म्भाविति जिसमें मगण भगण नगण लघु और गुरु हों उसे भ्रमरविलसिता कहते हैं।

"रथोद्धता र्नौ र्लौ ग्" ६। २२ इति पि० सू०

समन्वयः र० न० र० ल०गु०

S । S । । ।–S । S ।–S

रान्नराविह रथोद्धता लगौ ॥११॥

रादिति इह छन्दोजातौ यदि रात् रगणात्परौ नरौ नगण-रगणौ लगौ लघु-गुरू च भवतस्तदा रथोद्धता नाम। पादे यतिः॥

अन्वयः--

इह चेत् रात् नरौ लगौ च तदा रथोद्धता भवति।

भाषार्थः—

रादिति यदि रगण से परे नगण रगण लघु और गुरु हों तो रथोद्धता छन्द होता है।

"स्वागता र्नौ भ्गौ ग्" ६। २३ इति पि० सू०

समन्वयः र० न० भ० गु०२

S । S–। । ।–S । ।–S S

स्वागतेति रनभाद्गुरुयुग्मम् ॥१२॥

स्वागतेति यदि रनभात् रगण-नगण-भगणात् गुरुयुग्मं द्वौ गुरू भवतस्तदा स्वागतेति छन्दो भवति। पादे यतिः॥

अन्वयः—

चेत् रनभात् गुरुयुग्मं स्वागता इति भवति।

भाषार्थः—

स्वागतेति रगण नगण और भगण से परे दो गुरु हों तो स्वागता छन्द होता है।

'वृत्ता नौ स्गौ ग्" ६। २४ इति पि० सू०

समन्वयः

न० न० स० गु०२
।।।-।।।-।।ऽ-ऽऽ

ननसगगुरुरचिता वृत्ता ॥१३॥

नेति ननसगगुरुभिः नगण-नगण-सगण-गुरु-गुरुभी रचिता वृत्ता नाम छन्दः। ४।५ यति॥ इयम्पृथ्वीत्यपि कैश्चिदुच्यते। पृथ्वीति अत्य ग्रथां (अ० २ सू० १७) छन्दोन्तरमपि वक्ष्यते। अस्य वृत्तेति तस्य पृथ्वीति च नामैव सूत्रकृन्मतम्॥

अन्वयः—

ननसगगुरुरचिता वृत्ता भवति।

भाषार्थः—

नेति यदि दो नगण एक सगण और दो गुरु हों तो वृत्ता नामक छन्द होता है

"भाद्रिका नौ लौं ग्" इति प्रा० पि० सू० ॥१३॥

समन्वयः न० न० र० ल०गु०
।।।-।।।-ऽ।ऽ ।-ऽ

ननरलगुरुभिश्च भद्रिका ॥१४॥

नेति ननरलगुरुभिः नगण-नगण-रगण-लघु-गुरुभिः कल्पिता भद्रिका नाम छन्दो भवति। पादे यतिः। चन्द्रकेति नामान्तरं क्वचिदस्य

तदपि सूत्रानुकूलं न । चन्द्रिकानामकपृथक्छन्दसः(अ०ज० श्लो०६ सू०६) तेनोक्तेः ॥

अन्वयः—

ननरलगुरुभिः च भद्रिका भवति

भाषार्थः—

नेति जिसमें दो नगण एक रगण एक लघु और एक गुरु हो वह भद्रिका नामक वृत्त होता है ।

'श्येनी जौं लौं ग्' ६।२६ "विलासिनी जौ ज्गौ ग्" ६।२७

इति पि० सू०

समन्वयः

र० ज० र० ल०गु०

S I S - - I S I S I S I - S

श्येनिका रजौ रलौ गुरुर्यदा ॥१५॥

श्येनिकेति एवं यदा रजौ रगण-जगणौ रलौ-रगण-लघू गुरुश्च तदा श्येनिका नाम छन्दः स्यात् । पादे यतिः ॥ वेतिकेति नामान्तरं क्वचित् सूत्रानुकूलं त्विदमेव पैङ्गले "विलासिनी जौं ज्गौ ग्" ॥६।२७ इत्य-धिकमपि दृश्यते ॥

अन्वयः—

यदा रजौ रलौ गुरुः च तदा श्येनिका भवति ।

भाषार्थ. –

श्येनिकेति जब रगण जगण रगण लघु और गुरु हो तब श्येनिका छन्द होता है ।

"उपस्थितं ज्सौतगौ ग्" इति पि० सू० ६।१५ ॥

समन्वयः ज० स० त० गु०२

I S S-I I S S S I-S S

उपस्थितमिदं ज्सौ ताद्गकारौ ॥१६॥

उपेति यदा ज्सौ जगण सगणौ ततः तात् तगणात्परौ गकारौ द्वौ गुरू च भवतस्तदा उपस्थितमिदं छन्दः स्यात्। पादे यतिः॥ मः सो जो वेतिका रजौ गुरुर्यदा॥ जौ ज्गौ गुरुणेयमुपस्थितोक्ता॥ मौक्तिकमाला यदि भतनाद्गुगौ॥ उपचित्रमिदं सससा लगौ॥ कुपुरुषजनिता ननौ गौं गः॥ अनवसिता न्यौ भ्गौ गु यदन्ते॥

अन्वयः—

यदा ज्सौ तात् गकारौ च तदा इदमुपस्थितं भवति।

भाषार्थः—

उपेति जब जगण सगण तगण से परे दो गुरु हों तब उपस्थित नामक वृत्त होता है।

(मूलम्)

चन्द्रवर्त्म गदितं तु रनभसैः॥ जतौ तु वंशस्थमुदीरितं जरौ॥ स्यादिन्द्रवंशा ततजैरसंयुतैः॥ इह तोटकमम्बुधिसैः प्रथितम्॥ द्रुतविलम्बितमाह नभौ भरौ॥ वसुयुगविरतिर्नौ म्यौ पुटोऽयम्॥ प्रमुदितवदना भवेन्नौ रौ॥ नयसहितौ न्यौ कुसुमविचित्रा॥ रसैर्जसजसा जलोद्धतगतिः॥ भुजंगप्रयातं भवेद्यैश्चतुर्भिः॥ रैश्चतुर्भिर्युता स्रग्विणी संमता॥ भुवि भवेन्नभजरैः प्रियंवदा॥ त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः॥ धीरैरभाणि ललिता तभौ जरौ॥ जजाविह मौक्तिकदाम जजौ च॥ विभावरी तु सा जरौ जरौ

यतः॥ प्रमिताक्षरा सजससैरुदिता ॥ ननभरसहिता-ऽभिहितोज्ज्वला ॥ पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥ अब्ध्यङ्गैर्जलधरमाला म्भौ स्मौ ॥ इह नवमालिनी नजपरौ भ्यौ ॥ स्वरशराविरतिर्ननौ ररौ प्रभा ॥ भवति नजावथ मालती जरौ ॥ इति वद तामरसं न जजाद्यः ॥

---

"चन्द्रवर्त्म नौ भ्सौ" इति प्रा० पै० सू० १

समन्वयः र० न० भ० स०

ऽ।ऽ-। ।।-ऽ ।।।।ऽ

(जगत्याम्) ॥ चन्द्रवर्त्म गदितन्तु रनभसैः ।१॥

[ जगत्याम् १२ जातौ ] रनभसैः रश्च नश्च भश्च सश्च रनभसा रगण नगण-भगण-सगणास्तैः कृतं चन्द्रवर्त्मेति नाम छन्दः गदितं कथित-म्४ । ८ यतिः ॥

अन्वयः—

रनभसैः तु चन्द्रवर्त्म गदितम् ।

भाषार्थः—

चन्द्रेति यदि रगण नगण भगण और सगण हों तो आचार्यों ने चन्द्रवर्त्म छन्द कहा है।

"वंशस्था ज्तौ ज्रौ" इति पि० सू० ६।२६॥

समन्वयः ज० त० ज० र०

।ऽ।-ऽऽ-।ऽ।ऽ।ऽ

जतौ तु वंशस्थमुदीरितं जरौ ॥२॥

जेति यदि जश्च तश्च जतौ जगण-तगणौ तु पुनः जरौ जगण-रगणौ च भवतस्तदा बंशस्थं नाम छन्दः उदीरितं कथितम्। पादे यतिः

अन्वयः –

जतौ जरौ तु बंशस्थम् उदीरितम्।

भाषार्थः—

जताविति यदि जगण तगण जगण और रगण हों तो वंशस्थ कहते हैं।

"इन्द्रबंशा तौ ज्रौ" इति पि० सू० ६। ३०॥

समन्वयः त० त० ज० र०

ऽ। ऽ-ऽ ऽ।-।ऽ।-ऽ।ऽ

स्यादिन्द्रवंशा ततजै रसंयुतैः॥३॥

स्यादिति रसंयुतैः अन्ते रगणेन संयुक्तैः ततजैः तगण-तगण-जगणैः इन्द्रबंशा स्यात्। पादे यतिः॥

अन्वयः –

रसंयुतैः ततजैः इन्द्रबंशा स्यात्।

भाषार्थः—

स्यादिति रगण से युक्त दो तगण और एक जगण हो तो इन्द्रबंशा छन्द होता है॥

"तोटकं सः" इति पि० सू० ६। ३२॥

समन्वयः स० स० स० स०

।।ऽ-।।ऽ।।ऽ ।।ऽ

इह तोटकमम्बुधिसैः प्रथितम् ॥४॥

इहेति इह छन्दोजातौ अम्बुधिसैः चतुर्भिः सगणैः तोटकं प्रथितम्।६। ६ यतिः॥

अन्वयः—

इह अम्बुधिसैः तोटकं प्रथितम्।

भाषार्थः—

इहेति यहां जिसमें चार सगण हों वह तोटक नाम से प्रसिद्ध होता है।

(टि०) १ चत्वारः सगणा इति भावः।

"द्रुतविलम्बितं नभौ भ्रौ" इति पि० सू० ६ । ३१ ॥

समन्वयः न० भ० भ० र०

।।।-ऽ।।-ऽ।।।-ऽ।ऽ

द्रुतविलम्बितमाह नभौ भरौ ॥५॥

द्रुतेति यदा नभौ नश्च भश्चेति नगण भगणौ भरौ भगण-रगणौ च भवतस्तदा द्रुतविलम्बितमाह उक्तवान् मुनिः । (पादे यतिः) तथा च सूत्रं 'द्रुतेति"

अन्वयः--

चेत् नभौ भरौ द्रुतविलम्बितम् आह ।

भाषार्थः--

द्रुतेति १ नगण २ भगण और १ रगण हों तो उसे मुनि ने द्रुतविलम्बित नाम से कहा है।

"पुटो नौ म्यौ वसुसमुद्रः" इति पि० सू० ६ । ३३ ॥

समन्वयः न० न० म० य०

।।।।।।-ऽऽ ऽ-।ऽऽ

वसुयुगविरतिर्नौ म्यौ पुटोऽयम् ॥६॥

वस्विति यदि नौ द्वौ नगणौ म्यौ मगण यगणौ च यत्र। वसवोऽष्टौ युगानि चत्वारि च तैर्यतिर्यत्र, सोऽयं पुटो नाम छन्दः ॥

अन्वयः—

चेत् नौ म्यौ वसुयुगविरतिः अयं पुटो भवति ।

भाषार्थः—

वसु इति यदि दो नगण एक मगण और एक यगण हो और आठ तथा चार अक्षरों के अन्त में यति हो तो पुटनामक छन्द होता है।

"चञ्चलाक्षिका नौ रौ" इति सू० ६ । ३७ ॥

समन्वयः न० न० र० र०

।।।-।।।-ऽ।ऽऽ।ऽ

प्रमुदितवदना भवेन्नौ रौ ॥७॥

---

(टि०) १ यतिस्थानम् ८ । ४ इत्यर्थः ।

प्रमुदितेति नौ द्वौ नगणौ ररौ द्वौ रगणौ च यत्र भवतः सा प्रमुदितवदना नाम भवेत्। पादे यतिः॥ पैङ्गले तु "चञ्चलाक्षिका इति नाम्नोक्ता॥

अन्वयः—

यदि नौ ररौ तदा प्रमुदितवदना भवेत्।

भाषार्थः—

प्रेति दो नगण और दो रगण हों तो प्रमुदितवदना छन्द होता है। परन्तु पिङ्गलाचार्य ने इसे चञ्चलाक्षिका कहा है।

"कुसुमविचित्रा न्यौ न्यौ" ६। ३६॥

समन्वयः न० य० न० य०

। । ।-। ऽ ऽ--। । । । ऽ ऽ

नयसहितौ न्यौ कुसुमविचित्रा॥८॥

नेति यत्र न्यौ नगण यगणौ नयसहितौ नगण-यगणसंयुक्तौ स्यातां सा कुसुमविचित्रा नाम स्यात्। पादे यतिः॥ 'ततं नौ म्रौ६। ३५ इत्यधिकमुक्तं पैङ्गले॥

अन्वयः--

नयसहितौ न्यौ कुसुमविचित्रा भवति।

भाषार्थः –

नेति नगण और यगण से युक्त नगण और यगण हों तो कुसुमविचित्रा छन्द होता है।

जलोद्धतगतिर्ज्सौ ज्सौ रसैर्तव इति पि० सू०६ ।३७॥

समन्वयः ज० स० ज० स०

। ऽ । । । ऽ । ऽ । । । ऽ

रसैर्जसजसा जलोद्धतगति॥९॥

(टि० ११ वसुयुगविरतिर्ननौरौ प्रभेति मल्लिनाथः। नयुगरयुगजं तु गौरी मतेति कौमुदीकारः। २ यतिस्थानम् (६।६) इत्यर्थः।

रसैरिति यत्र रसैः षड्भिः २ यतिः । तथा जसजसा जगण सगण-जगण-सगणाः स्युः सा जलोद्धतगतिर्नाम छन्दः ॥

अन्वयः—

चेत् जसजसा रसैः (यतिः) जलोद्धतगतिः भवति ।

भाषार्थः—

रसैरिति जगण-सगण से परे पुनः जगण-सगण हों । और छः २ अक्षरों के अन्त में यति हो तो जलोद्धतगति नामक छन्द होता है ।

## भुजङ्गप्रयातं यैः[1] इति पि० सू० ६ । ३८ ॥

समन्वयः य० य० य० य०

।SS-।SS-।SS-।SS

भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः ॥१०॥

भुजङ्गेति चतुर्भिः यैः यगणैर्भुजङ्गप्रयातं नाम छन्दो भवेत् । ६।६ यतिः

अन्वयः—

यैः चतुर्भिः भुजङ्गप्रयातं भवेत् ।

भाषार्थः—

भुजङ्गेति यदि चार यगण हों तो भुजङ्गप्रयात छन्द होता है ।

## स्रग्विणी र[2]ः इति पि० सू० ६ । ३६ ॥

समन्वयः र० र० र० र०

S।S-S।S-S।S-S।S

रैश्चतुर्भिर्युता स्रग्विणी संमता ॥११॥

रैरिति चतुर्भी रैः रगणैः युता स्रग्विणी सम्मता अभिमता मुनेः । पादे यतिः ॥ तथाच सूत्रम् ॥ "स्रग्विणी रः" ६।३६ इति

अन्वयः—

चतुर्भिः रैः युता स्रग्विणी संमता ।

---

(टि०) १—२ चत्वार इति भावः ।

भाषार्थः—

रैरिति जिसमें चार रगण हों उसे स्रग्विणी नाम से कहा है।

## प्रियंवदा न्भौ ज्रौ प्रा० पै० सू०

समन्वयः न० भ० ज० र०

। । । ।-S । । । S ।-S । S

भुवि भवेन्नभजरैः प्रियंवदा ॥१२॥

भुवीति नभजरैः नगण—भगण—जगण रगणैः भुवि पृथिव्यां प्रसिद्ध प्रियंवदेति नाम छन्दो भवेत्। पादे यतिः॥

अन्वयः—

नभजरैः भुवि प्रियंवदा भवेत्।

भाषार्थः—

भुवीति जिसमें नगण भगण जगण और रगण हों वह पृथिवी में प्रियंवदा नाम से प्रसिद्ध है।

## मणिमाला त्यौ त्यौ इति प्रा० पि० सू०

समन्वयः त० य० त० य०

S S ।—। S S-S S ।-। S S

त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः ॥१३॥

त्याविति यत्र त्यौ तगण—यगणौ त्यौ पुनः तगण-यगणौ च स्यातां सा मणिमाला नाम। परं गुहवक्त्रैः छिन्ना गुहः कार्तिकेयस्तस्य क्त्राणि मुखाणि षट् तत्संख्यया यतिर्विधेयेत्यर्थः॥

अन्वयः—

यत्र त्यौ त्यौ गुहवक्त्रैः छिन्ना सा मणिमाला भवति।

भाषार्थः—

त्याविति जिसमें तगण—यगण से परे तगण-यगण हों, और गुह अर्थात कार्तिकेय के मुख अर्थात् छः से परे यति हो, तो मणिमाला छन्द होता है।

"ललिता तभौ जरौ" इति प्रा० पै० सू०

समन्वयः त० भ० ज० र०

ऽऽ।-ऽ।।। ऽ।-ऽ।ऽ

धीरैरभाणि ललिता तभौ जरौ ॥१४॥

धीरैरिति यत्र तभौ तगण—भगणौ जरौ जगण-रगणौ च स्यातां सा धीरैर्मनीषिभिः ललिता इति अभाणि उक्ता। पादे यतिः॥

अन्वयः--

चेत् तभौ जरौ धीरैः ललिता अभाणि।

भाषार्थः--

धीरैरिति यदि तगण भगण जगण और रगण हों तो धीर पुरुषों ने उस छन्द का नाम ललिता कहा है।

"मौक्तिकदाम जः[१]" इति प्रा० पै० सू०

समन्वयः ज० ज० ज० ज०

।ऽ।-।ऽ।-।ऽ।।ऽ।

जजाविह मौक्तिकदाम जजौ च ॥१५॥

जेति यत्र जजौ जजौ चत्वारो जगणाः तत् मौक्तिकदाम नाम छन्दः इह अस्मिन् शास्त्रे स्यात्। पादे यतिः॥

अन्वयः--

चेत् जजौ जजौ च इह मौक्तिमदाम भवति।

भाषार्थः--

जेति जिस वृत्त में चारों जगण हों उसे इस छन्दःशास्त्र में मौक्तिकदाम वृत्त कहा है।

समन्वयः ज० र० ज० र०

।ऽ।-ऽ। ऽ-।ऽ।-ऽ।ऽ

विभावरी तु सा जरौ जरौ यतः ॥१६॥

---

(टि०) १ चत्वार इत्यभिप्रायः

विभेति यतो यत्र (सार्वविभक्तिकस्तसिः) जरौ जगण—रगणौ तु पुनः जरौ जगण—रगणौ भवतः सा विभावरी नाम। ६। ६ यतिः स्वमोचचामरमस्यैव नामान्तरम्॥ (पृ० ६८। प०४)

अन्वयः—

यतः जरौ जरौ सा विभावरी भवति।

भाषार्थः—

विभेति जिस वृत्त में जगण-रगण से परे पुनः जगण-रगण हों उसे विभावरी वृत्त कहते हैं।

"प्रमिताक्षरा स्जौ सौ" इति पि० सू० ६। ४०

स० ज० स० स०

। । ऽ । ऽ । । । ऽ । । ऽ

प्रमिताक्षरा सजससैरुदिता॥१७॥

प्रमितेति सगण—जगण—सगण—सगणैः प्रमिताक्षरा नाम उदिता कथिता।

अन्वयः—

सजससैः प्रमिताक्षरा उदिता।

भाषार्थः—

प्रमितेति सगण—जगण से परे दो सगण और हों तो उसका नाम प्रमिताक्षरा कहा है।

"महोज्ज्वला नौ भ्रौ" इति प्रा० पै० सू०

अन्वयः न० न० भ० र०

। । । । । । ऽ । । ऽ । ऽ

ननभरसहिता ऽभिहितोज्ज्वला॥१८॥

नेति नगण—नगण-भगण-रगणैः या सहिता सा उज्ज्वला अभिहिता कथिता मुनिनेति शेषः॥

अन्वयः—

ननभरसहिता उज्ज्वला अभिहिता ।

भाषार्थः

नेति जिसमें प्रथम दो नगण और अनन्तर में १ भगण और १ रगण हों उसका नाम उज्ज्वला कहा है ।

"वैश्वदेवी मौ याविन्द्रियऋषयः" इति प्रा० पि० सू०

समन्वयः म० म० य० य०

ऽ ऽ ऽ- ऽ ऽ ऽ·। ऽ ऽ-ऽ ऽ ऽ

पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥१९॥

पञ्चेति यत्र ममौ द्वौ मगणौ ततो यौ द्वौ यगणौ च स्यातां सा वैश्वदेवी । परन्तु पञ्चाश्वैश्छिन्ना पञ्चाक्षरैः प्रथमा यतिः ततोऽश्वैः सप्तभिर्द्वितीया यतिः कार्या ॥

अन्वयः —

चेत् ममौ यौ पञ्चाश्वैः छिन्ना वैश्वदेवी भवति ।

भाषार्थः—

पञ्चेति जिसमें प्रथम दो मगण हों और अनन्तर में दो यगण हों तथा पांच और सात अक्षरों के अन्त में यति (विराम) हो उस छन्द का नाम वैश्वदेवी होता है ।

"जलधरमाला म्भौ स्मौ समुद्रवसवः" इति प्रा० पि० सू०

समन्वयः म० भ० स० म०

ऽ ऽ ऽ- ऽ । ।-। । ऽ-ऽ ऽ ऽ

अब्ध्यङ्गैः स्याज्जलधरमाला म्भौ स्मौ ॥२०॥

अब्धीति यत्र अब्धयश्चत्वारोऽङ्गान्यष्टौ अत्राङ्गशब्देन (यमनियमासन—प्राणायाम—प्रत्याहार—ध्यान—धारणा—समाधयो योगाङ्गानि गृह्यन्ते) तैर्विरामः तथा म्भौ मगण-भगणौ स्मौ सगण-मगणौ च स्या-

---

(टि०) १ यतिस्थानम् पञ्च षट् च (तदुत्तरम्) २ यति स्थानं ४—८ उत्तरम् ॥

तां सा जलधरमाला नाम छन्दो भवति। प्रा० पैङ्गले तु गाथाभेदत्वेन "जलधरमाला म्भौ स्मौ समुद्र[1]वसव" इति सू० उक्तम्।

अन्वयः--

म्भौ स्मौ, अब्धङ्कैः यतिः च तदा जलधरमाला भवति।

भाषार्थः--

अब्धीति जिसमें मगण-भगण और सगण-मगण हों तथा अब्धि चार और अङ्क आठ जो यमनियमादिक योगशास्त्र में वर्णित हैं उनसे अर्थात् चार तथा आठ अक्षरों के अन्त में यति (विराम) हो तो जलधरमाला नामक छन्द होता है।

"नवमालिनी न्जौ भ्याविति" इति पि० सू० ६।४४

समन्वयः न० ज० भ० य०

ı ı ı-ı ऽ ı-ऽ ı ı ı-ı ऽ ऽ

इह नवमालिनी नजपरौ भ्यौ ॥२१॥

इहेति यदि नजपरौ नगण-जगणाभ्यां परौ भ्यौ भगण यगणौ-स्तस्तदा इह जातौ नवमालिनी नाम भवति। ८। ४ यतिः।

अन्वयः—

चेत् नजपरौ भ्यौ इह नवमालिनी मता।

भाषार्थः—

इहेति नगण और जगण से परे भगण और यगण हों तो नवमालिनी छन्द होता है।

समन्वयः न० न० र० र०

ı ı ı-ı ı ı-ऽ ı ऽ ऽ ı ऽ

स्वरशरविरतिर्ननौ रौ प्रभा ॥२२॥

स्वरेति यत्र स्वरैः सप्तभिस्ततः शरैः पञ्चभिर्विरतिर्विरामः। तथा ननौ द्वौ नगणौ रौ द्वौ रगणौ च भवतः सा प्रभा नाम छन्दः॥

(टि०) १ यतिस्थानम् ४—८न उत्तरमित्यर्थः।

अन्वयः---

चेत् ननौ रौ, स्वरशरविरतिः च प्रभा नाम भवति।

भाषार्थः

स्वरेति जिसमें दो नगण और दो रगण हों, तथा स्वर सात और शर पांच से यति हो उसे प्रभा वृत्त कहते हैं।

"मालती न्जौ ज्रौ" इति प्रा० पि० सू०

समन्वयः ज० ज० ज० र०

। । ।-। ऽ ।-। ऽ।-ऽ । ऽ

**भवति नजावथ मालती जरौ ॥२३॥**

भवतीति यत्र नजौ नगण-जगणौ अथ जरौ जगण-रगणौ स्तः सा मालती नाम छन्दो भवति। ५। ७ यतिः॥

अन्वयः--

चेत् नजौ अथ जरौ मालती भवति।

भाषार्थः --

भवतीति जिसमें नगण जगण और जगण रगण हों तथा पांच और सात म यति हो उसे मालती वृत्त कहते हैं।

"तामरसं न्जौ ज्यौ" इति प्रा० पि० सू० ६।१३ "कान्तोत्पीडा म्भौ स्मौ ६।४१ वाहिनी त्यौ म्याद्वृषिकामशराः" ६।४२पि०सू०

समन्वयः न० ज० ज० य०

। । ।-। ऽ।-।ऽ ।-। ऽ ऽ

**इति वद तामरसं नजजाद्यः॥**

इतिति यत्र नजजात् नगण-जगण-जगणात्परो यो यगणः इति

---

टि० १ अतः ७--५ स्थानमित्यर्थः।

स्यात्तदा तामरसं नाम छन्दः त्वं वद कथय। पादे यतिः। पैङ्गले तु अधिकं सूत्रद्वयं दृश्यते। नयुगरयुगलं च गौरी मता॥ पञ्चमुनी म्भौ सात्सयुता ललना॥ ललितमभिहितं नौ म्रौ नामतः॥ द्रुतपदं भवति नभनयश्चेत्॥ यौ त्याविति निर्दिष्टा पुष्पविचित्रा॥ *ननररघटिता तु मन्दाकिनी॥ भवति तती नजजै रसंयुतैः॥ जरौ जरौ वद स्वमोचचामरम्॥

अन्वयः--

चेत् नजजात् य इति तामरसं वद।

भावार्थः—

इहेति एक नगण और दो जगणों से परे यगण हों तो तामरस नाम कह दो।

मूलम्

——०——

तुरगरसयतिर्नौ ततौ गः क्षमा॥ म्नौ ज्रौ गास्त्रिदशयति प्रहर्षणीयम्॥ चतुर्ग्रहैरिह रुचिरा ज्भौ सरौ गः॥ वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम्॥ सजसा जगौ भवति मञ्जुभाषिणी॥ ननततगुरुभिश्चान्द्रिकाऽश्वर्तुभि॥

——०——

"क्षमा नौ ततौ ग् तुरगरसयतिः" इति प्रा० पि०सू०१०

समन्वयः न० न० त० त० गु०

।।। ।।। ऽऽ। ऽऽ। ऽ

(अतिजगत्याम्) तुरगरसयतिर्नौ ततौ गः क्षमा॥१॥

[अथाऽतिजगत्यां १३ जातौ] तुरगेति यत्र तुरगरसैः सप्तभिः

षड्भिश्च यतिर्विरामः स्यात्तथा नौ द्वौ नगणौ ततौ द्वौ च तगणौ गो गुरुश्च स्यात् सा क्षमा नाम छन्दः ॥

अन्वयः—

यत्र नौ ततौ गः, तुरगरसयतिः च स्यात् सा क्षमा ।

भाषार्थः—

तुरगेति जिस में दो नगण दो तगण और एक गुरु हो, तथा जिस में तुरग (घोड़े)७ और रस ६ से आगे यति हो उसे क्षमा नाम वृत्त कहते हैं ।

## प्रहर्षिणी म्नौ ज्रौ ग् त्रिकदशकौ इति पि०सू० ७।१॥

समन्वयः म० न० ज० र० गु०

ऽ ऽ ऽ-। । ।-। ऽ । ऽऽ ऽ-ऽ

म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयम् ॥२॥

म्नाविति यत्र म्नौ मगण-नगणौ ज्रौ जगण-रगणौ गो गुरुश्च स्यात् । तथा त्रिदशयतिः त्रिभिरक्षरैस्ततो दशाक्षरैश्च यतिर्विरामः स्यात् इयं प्रहर्षिणी नाम छन्दः ॥

अन्वयः —

यत्र म्नौ ज्रौ गः। त्रिदशयतिः च, इयं प्रहर्षिणी मता ।

भाषार्थः –

म्नाविति जिस वृत्त में मगण नगण जगण रगण और गुरु हों तथा तीन और दश अक्षरों के अन्त में यति हो तो प्रहर्षिणी नाम वृत्त होता है ।

## "रुचिरा ज्भौ स्रौ ग् चतुर्नवकौ इति पि०सू० ७।२ ॥

समन्वयः ज० भ० स० र० गु०

। ऽ ।-ऽ । ।-। । ऽ—ऽ । ऽ—ऽ

चतुर्ग्रहैरिह रुचिरा ज्भौ सरौ गः ॥३॥

चतुरिति यत्र ज्भौ जगण-भगणौ तथा सरौ सगण-रगणौ गो

---

(टि०) यतिस्थाने ३ । १० इत्यर्थः ॥

गुरुश्च स्यात् । सा रुचिरा नाम छन्दः। इह छन्दसि चतुर्ग्रहैः चतुर्भिरक्षरैः प्रथमा यतिः, ततो ग्रहैर्नवभिरक्षरैर्द्वितीया यतिः कार्या ।

अन्वयः—

यत्र ज्भौ सरौ गः, चतुर्ग्रहैः यतिः, सा इह रुचिरा ।

भाषार्थः—

चतुरिति जिसमें जगण भगण सगण रगण और एक गुरु हों तथा चार 'ग्रह' संख्या नौ से यति हो उसका नाम इस छन्दशास्त्र में रुचिरा कहा है।

**मत्तमयूरं म्तौ य्सौ ग् समुद्रनवकौ** इति प्रा० पि० सू० ।५।

म० त० य० स० गु०

ऽऽऽ-ऽऽ।-।ऽऽ-।।ऽ-ऽ

**वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् ॥४॥**

वेदैरिति यत्र वेदैश्चतुर्भिरक्षरैः रन्ध्रैर्नवभिश्च यतिः। तथा म्तौ मगण-तगणौ यसगाः यगण-सगण-गुरवश्च स्युः तत् मत्तमयूरं नाम छन्दः ।

अन्वयः—

यत्र म्तौ यसगाः, वेदैः, रन्ध्रैः च यतिः, तत् मत्तमयूरम् ।

भाषार्थः—

वेदैरिति जिसमें मगण तगण यगण सगण और एक गुरु हों, और 'वेद-चार तथा 'रन्ध्र' नौ से यति हो उसे मत्तमयूर छन्द कहते हैं ।

**"मञ्जुभाषिणी स्जौ स्जौ ग्"** इति प्रा० पि० सू० ।५।।

समन्वयः स० ज० स० ज० गु०

।।ऽ-।ऽ।-।।ऽ-।ऽ।-ऽ

**सजसा जगौ भवति मञ्जुभाषिणी ॥५॥**

सेति यत्र सजसा सगण-जगण-सगणाः स्युः ज्गौ जगण-गुरू च स्तः सा मञ्जुभाषिणी नाम । ५ । ८ यतिः ॥

---

(टि०) १ यतेः ४—९ स्थानमित्यर्थः ।

अन्वयः –

चेत् सजसा जगौ च मञ्जुभाषिणी भवति ।

भाषार्थः—

सजेति सगण जगण सगण और जगण गुरु हों तो मञ्जुभाषिणी छन्द होता है ।

"चन्द्रिका नौ तौ ग् मुनिरसैः" इति प्रा० पि० सू ।८॥

समन्वयः न० न० त० त० गु०

। । ।-। । ।-ऽ ऽ ।--ऽ ऽ । ऽ

ननततगुरुभिश्चन्द्रिकाऽश्वर्तुभिः ॥६॥

नेति ननततगुरुभिः नगण-नगण-तगण–तगण-गुरुभिः रचिता चन्द्रिका नाम छन्दः। अत्र अश्वैः सप्तभिस्ततः ऋतुभिः षड्भिश्च यतिः कार्या ॥ उपस्थितमिदं ज्सौ त्सौ सगुरुकौ चेत् ॥ यमौ रौ विख्याता चञ्चरीकावली गः ॥ जसौ स्जगावतिरुचिराऽम्बुधिग्रहैः ॥ नसरयुगगैश्चन्द्रलेखर्तुलोकैः । ऋतुमुनियति विद्युन्ननौ तौ गुरुः ॥ * जतौ सजौ गो भवति मञ्जुहासिनी ॥ नवनन्दिनी सजससैर्गुरुयुक्तैः ॥ कुटिलगतिर्नजौ सप्तभिस्तौ गुना ॥

अन्वयः

चेत् अश्वर्तुभिः यतिः ननततगुरुभिः युता चन्द्रिका भवति ।

भाषार्थः—

नेति जिस में दो नगण दो तगण और एक गुरु हों, 'अश्व, सात तथा 'ऋतु' छः से यति हो तो चन्द्रिका नामक वृत्त होता है ।

"गौरी नौ न्सौ ग्" इति पि० सू० ७ । ४ ॥ अधिकं दृश्यते ॥

---

(टि०) १ यतः ७—६ स्थाने इत्यर्थः ॥

( मूलम् )

म्तौ न्सौ गावक्षग्रहाविरतिरसंबाधा ॥ ननरसलघुगैः स्वरैरपराजिता ॥ ननभनलगिति प्रहरणकलिका ॥ उक्ता वसन्ततिलका तभजा जगौ गः ॥ सिंहोन्नतेय-मुदितामुनिकाश्यपेन ॥ उद्धर्षिणीति गदिता मुनिसैतवेन ॥ रामेण सेयमुदिता मधुमाधवीति ॥

'असंबाधा म्तौ न्सौ गाविन्द्रियैर्नवकौ' इति पि० सू० ७।५

समन्वयः

म० त० न० स० गु० २

S S S–S S I I I I I I S–S S

( शक्वर्याम् ) म्तौ न्सौ गावक्षग्रहविरतिरसंबाधा । १ ॥

(अथ शक्वर्यां (१४) जातौ) म्ताविति यदा म्तौ मगण तगणौ न्सौ नगण-सगणौ गौ द्वौ गुरू च तदा असंबाधा नाम छन्दो भवति । अत्र अक्षैरिन्द्रियैः पञ्चभिः ग्रहैः नवभिश्च यतिः कार्या ॥

अन्वयः—

यत्र म्तौ न्सौ गौ, अक्षग्रहविरतिः च सा असम्बाधा ।

भाषार्थः—

म्ताविति जिस में मगण तगण और नगण सगण तथा दो गुरु हों, और 'अक्ष' इन्द्रियों की संख्या पांच तथा 'ग्रह' की संख्या नौ से यति हो तो असम्बाधा नाम छन्द होता है ।

(टि०) १ यतिस्थाने ५ । ६ इत्यर्थः ।

'अपराजिता नौ सौं ल्गौ स्वरऋषयः' इति पि० सू० ७ ६

समन्वयः न० न० र० स० ल०गु०

।।।-।।।-ऽ।ऽ-।।ऽ।-ऽ

ननरसलघुगैः स्वरैरपराजिता ॥ २०॥

नेति ननरसलघुगैः नगण नगण-रगण-सगण-लघु-गुरुभी रचिता-ऽपराजिता नाम छन्दः। अत्र स्वरैः स्वराश्च स्वराश्च तैः इत्येकशेषे सप्तभिः २ यतिः कार्या ॥

अन्वयः---

या ननरसलघुगैः युता स्वरैः २ च यतिः सा अपराजिता भवति।

भाषार्थः---

नेति जो दो नगण, एक रगण एक सगण, एक लघु, और एक गुरु से युक्त हो। तथा सात २ अक्षरों के अन्त में यति हो वह अपराजितानामक छन्द होता है।

"प्रहरणकलिका नौ भ्नौ ल्गौ च'। इति पि० सू० ७। ६

समन्वयः न न० भ० न ल०गु०

।।।-।।।-ऽ।।-।।।।-ऽ

ननभनलगिति प्रहरणकलिका ॥ ३ ॥

नेति ननभनलगिति नश्च नश्च भश्च नश्च लश्च गश्च तेषां समाहारः ननभनलग् नगण नगण भगण-नगण-लघु-गुरु च इति यत्र सा प्रहरणकलिका नाम छन्दः ५। ९ यतिः ॥

अन्वयः --

ननभनलगिति प्रहरणकलिका भवति।

भाषार्थः

नेति जिस में दो नगण, एक भगण, एक नगण, एक लघु, और एक गुरु हो वह प्रहरणकलिकानामक छन्द होता है ।

---

(टि०) १ यतेः ७—७ स्थाने इत्यर्थः।

"वसन्ततिलका त्भौ जौ गौ॥ ७।८ "सिंहोन्नता काश्यपस्य॥ ७।८ ॥उद्धर्षिणी सैतवस्य॥ ७।६ इति पि० सू०

समन्वयः त० भ० ज० ज० गु०गु०

ऽ ऽ।-ऽ । ।-। ऽ ।-। ऽ ।-ऽ-ऽ

उक्ता वसन्ततिलका तभजा जगौ गः॥

सिंहोन्नतेयमुदिता मुनिकाश्यपेन॥

उद्धर्षिणीति गदिता मुनिसैतवेन॥

रा[1]मेण सेयमुदिता[2] मधुमाधवीति॥ ४॥

उक्तेति यत्र तभजा तगण-भगण-जगणा जगौ जगण-गुरू गः पुनः गुरुश्च सा वसन्ततिलका नाम उक्ता यथासम्भवं यतिः। मतान्तरमाह सिंहेति इयं वसन्ततिलका काश्यपेन मुनिना सिंहोन्नता उक्ता भणिता। तथा इयं सैतवेन मुनिना उद्धर्षिणी निगदिता। सा इयं रामेण विदुषा मधुमाधवी इति नाम्ना उदिता कथिता॥

ननतजगुरुगैः सप्तयतिर्नदी स्यात्। लक्ष्मीरन्तविरामा म्सौ तभौ गुरुयुग्मम्॥ त्रिननगगिति वसुयति सुपवित्रम्॥ मध्यक्षमा युगदशविरमा म्भौ न्यौ गौ॥ (इदमेव कुटिलमित्यन्ये) नजभजला गुरुश्च भवति प्रमदा॥ सजसा यलौ गिति शरग्रहैर्मञ्जरी। नजभजगैर्गुरुश्च वसुषट्कुमारी॥ नरनरैर्लगौ च रचितं सुकेशरम्। इन्दुवदना भजसनैः सगुरुयुग्मैः॥ द्विःसप्तच्छिदि लोला म्सौ म्भौ गौ चरणे चेत्॥* सजसा य्लगाश्च वसुधा सपञ्चग्रहैः॥ *युगदिग्भिः कुटिलमिति मतं स्भौ न्यौ गौ॥ * नजभजलग्युता धृतिरियं

---

(टि० १ नागेनेति २ श्रीपिङ्गलेन कथितेति च पाठान्तरम्॥

कथिता ॥ *म्भौ न्यौ गौ चेज्जलधिदश च हंसश्येनी ॥ *म्भौ न्यौ ल्गौ चेद्भवति जगति चन्द्रौतस. ॥*देवरवरतनु भननलघुगैः । * मस्तो नो मो गौ•यदि गदिता वासन्तीयम् ॥ * ननततगयुगैः सप्तभिर्वै वसन्तः ॥

अन्वयः—

यत्र तभजा जगौ गः, सा वसन्ततिलका उक्ता । इयं मुनि काश्यपेन सिंहोन्नता-उदिता । मुनिसैतवेन उद्धर्षिणी इति गदिता । सा इयं रामेण मधुमाधवी इति उदिता ॥

भाषार्थः—

उक्तेति जिसमें तगण भगण जगण जगण और दो गुरु हों वह वसन्ततिलका नामक छन्द कहा है । ( इसमें मतान्तर प्रदर्शन कराता है ) परन्तु मुनि काश्यप जी ने इस (वसन्ततिलका) का नाम सिंहोन्नता कहा है । तथा सैतव मुनि ने इसका उद्धर्षिणी नाम कहा है । और आचार्य राम ने (यदि 'रामेण सेयमुदिता' की जगह 'श्रीपिङ्गलेन कथिता' पाठ हो तो 'श्रीपिङ्गलाचार्य' ने ऐसा अर्थ हो सकता है ) इसे मधुमाधवी नाम से प्रकट किया है ।

मूलम्

द्विहतहयलघुरथ गिति शशिकला ॥ स्रगिति भवति रसनवकयतिरियम् ॥ वसुमुनियतिरिह मणिगुण-निकरः ॥ मा बाणाः स्युर्यस्यां सा कामक्रीडा संज्ञातव्या ॥ ननमयययुतेयं मालिनी भोगिलोकैः॥ भवति नजौ भजौ रसहितौ प्रभद्रकम् ॥ सजना नयौ शरदशकविरतिरेला ॥ म्रौ म्यौ यान्तौ भवेतां सप्ता-ष्टकैश्चन्द्रलेखा ॥

———:०:———

"चन्द्रावती नौ नौ स्" ७।१० इति पि० सू०

लं०१४ गु०

समन्वयः ।।।।।।।।।। ।। ।।।-ऽ

(अतिशक्कर्याम्) द्विहतहयलघुरथ गिति शशिकला ॥१॥

(अथाऽतिशक्कर्यां १५ जातौ) द्विहता द्वाभ्यां गुणिता हयाः सप्त जाताश्चतुर्दश प्रागेव तावन्तो लघवो यत्र अथ तदनु ग् इति एको गुरुश्च सा शशिकला नाम छन्दो भवति। ७। ८ यतिः॥

अन्वयः--

द्विहतहयलघुः, अथ गः, इति शशिकला भवति।

भाषार्थः—

द्वीति दो से गुणित ( गुणे हुए ) सात अर्थात् सात से दूने चौदह लघु जिस में प्रथम हों, और अन्त में एक गुरु हो तो शशिकलानामक छन्द होता है। इसमें ७-८ में यति होती है॥

"मालर्तुनवकौ चेत्" इति पि० सू० ७। १२॥

समन्वयः गु०

१४ल० ऽ

स्रगिति भवति रसनवकयतिरियम् ॥२॥

स्रगिति यदि इयं शशिकला रसनवकयतिः षड्भिः नवभिश्च यतिर्यस्याः तादृशी भवति तदेत्यनया रीत्या स्रग् नाम छन्दो भवति॥

अन्वयः--

इयं रसनवकयतिः स्रक् इति भवति।

भाषार्थः—

स्रगिति यदि इस (शशिकला) ही में ७-८ को छोडकर 'रस, छः और नौ के अन्त में यति हो तो इसी का स्रक् नाम हो जाता है। अर्थात् शशिकला और स्रक्

(टि०) १ यतेः (६-९) स्थानं तदा माला इत्यर्थः।

में गुरु लघु का भेद नहीं होता वह सब समान ही होते हैं। केवल यति का भेद हो जाने से इनके दो नाम हो जाते हैं। ७-८ में यति से शशिकला, ६-९ में स्रक्। पिङ्गलाचार्य ने इस ( स्रक् ) का नाम 'माला' अपने सूत्र में लिखा है।

"मणिगुणनिकरोऽष्टावृषयः" इति पि० सू० ७। १३॥

समन्वयः

वसुमुनियतिरिह मणिगुणनिकरः ॥३॥

वस्विति इह अस्यां शशिकलायां यदि वसु-मुनिभिः अष्ट-सप्तभिर्यतिर्यत्र तादृशी तदेयं मणिगुणनिकरो नाम छन्दः स्यात्

अन्वयः—

इह वसुमुनियतिः मणिगुणनिकरो भवति।

भाषार्थः—

**वसु** इति इस शशिकला ही में यदि आठ और सात के अन्त में यति हो तो इसी का नाम मणिगुणनिकर हो जाता है।

"सारङ्गिका माः पञ्च" इति प्रा० पि० सू० २॥

समन्वयः म० म० म० म० म०

ऽ ऽ ऽ—ऽ ऽ ऽ—ऽ ऽ ऽ—ऽ ऽ ऽ—ऽ ऽ ऽ

मा बाणाः स्युर्यस्यां सा कामक्रीडा संज्ञातव्या ॥४॥

मेति यस्यां बाणाः पञ्च मा मगणाः स्युः सा कामक्रीडा[2] संज्ञातव्या बोध्या॥

अन्वयः—

यस्यां बाणाः माः स्युः सा कामक्रीडा संज्ञातव्या।

भाषार्थः—

**मा** इति जिसमें बाण अर्थात् पांच मगण हों उसका नाम कामक्रीडा जानना।

'मालिनी नौ म्यौ य्" इति पि० सू० ७। १४॥

(टि०) १ यतेः (८-७)स्थानमित्यर्थः। २ इदं प्राकृतपैङ्गले नामान्तरेणोक्तम्॥

समन्वयः न० न० म० य० य०

। । । । । । ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

ननमयययुतेऽयं मालिनी भोगिलोकैः ॥५॥

नेति या ननमययैः नगण-नगण-मगण-यगण-यगणैः युता इयं मालिनी नाम छन्दः। अस्यां च भोगिलोकैः अष्टभिः सप्तभिश्च यतिर्विधेया

अन्वयः—

या ननमययुता, इयं मालिनी। अत्र भोगिलोकैः यतिः भवति।

भाषार्थः—

नेति जिसमें दो नगण एक मगण तथा दो यगण हों, और आठ तथा सात के अन्त में यति हो इसे मालिनी छन्द कहते हैं।

"प्रभद्रकं न्जौ भ्जौ रः" इति प्रा० पि० सू० ६ ॥

समन्वयः न० ज० भ० ज० र०

। । । । ऽ । ऽ । । । ऽ । ऽ । ऽ

भवति नजौ भजौ रसहितौ प्रभद्रकम् ॥६॥

भवतीति यदा नजौ नगण-जगणौ भजौ भगण-जगणौ अन्तेरेण रगणेन सहितौ तदा प्रभद्रकं नाम छन्दो भवति। ७। ८ यतिः ॥

अन्वयः—

नजौ भजौ रसहितौ प्रभद्रकं भवति।

नेति जिसमें नगण-जगण तथा भगण-जगण अन्त में रगण से युक्त हों वह प्रभद्रक नाम वृत्त होता है।

"एला स्जौ नौ य् शरदशभिः" इति प्रा० पि० सू० ७॥

समन्वयः स० ज० न० न० य०

। । ऽ । ऽ । । । । । । । । ऽ ऽ

सजना नयौ शरदशकविरतिरेला ॥७॥

सेति यत्र सजना सगण-जगण-नगणाः नयौ नगण-यगणौ च

(टि०) यतिः ५। १० तोऽन्ते।

भवतः तथा शरदशकविरतिः पञ्चभिस्ततो दशभिर्वर्णैर्विरतिर्यतिः यत्र सा एला नाम छन्दः।

अन्वयः--

यत्र सजना नयौ, शरदशकविरतिश्च, सा एला भवति।

भाषार्थः--

सेति जिसमें सगण जगण नगण और नगण यगण क्रमशः हों, तथा 'शर' पांच और दश के अन्त में यति हो वह एलानामक छन्द होता है।

चन्द्रलेखा म्रौ म्यौ य् स्वराष्टभिः इतिप्रा० पि० सू० ७॥

समन्वयः म० र० म० य० य०

S S S—S I S-S S S-I S S-I S S

म्रौ म्यौ यान्तौ भवेतां सप्ताष्टकैश्चन्द्रलेखा ॥८॥

म्राविति यदि म्रौ मगण-रगणौ म्यौ मगण-यगणौ च यान्तौ यगणान्तौ भवेतां। यतिश्च सप्तभिरष्टाभिश्चाऽक्षरैर्भवेत्सा चन्द्रलेखा-संज्ञा स्यात्॥ नजभजरैर्विराजितमिदं सुकेसरम्॥ चन्द्रलेखाभिधा रौ म्यौ यो विरामः स्वराष्टौ॥ ननततभरकृताङ्गैः स्वरैरुपमालिनी। चित्रा नाम छन्दो यस्यां स्युस्त्रयो मास्ततो यौ। * भवतः सजौ सजयुतौ वृषभस्ततो यः॥ रान्नभद्वितयरैरुदितं रमणीयकम्॥

अन्वयः--

यत्र म्रौ म्यौ यान्तौ भवेतां सप्ताष्टकैः यतिः च सा चन्द्रलेखा भवति॥

भाषार्थः--

म्राविति जिसमें मगण-रगण तथा मगण-यगण अन्त में यगण से युक्त हों, तथा सात और आठ के अन्त में यति हो वह चन्द्रलेखा नामक छन्द होता है।

---

(टि०) १ सप्तभिरष्टभिश्च यतिरित्यर्थः।

मूलम्

—o—

भ्रात्रिनगैः स्वरात्खमृषभगजविलसितम् ॥
नजभजरैः सदा भवति वाणिनी गयुक्तैः ॥
जरौ जरौ जगाविदं वदन्ति पञ्चचामरम् ॥

—:o:—

ऋषभगजविलसितं भ्रौ नौ न्गौ स्वरनवकौ इतिपि०सू०७।१५

समन्वयः भ० र० न० न० न० गु०
S I I-S S S--I I I-I I I-I I I-S

(अष्ट्याम्) भ्रात्रिनगैः स्वरात्खमृषभगजविलसितम् ॥१॥

(अथ अष्टयाम् १६ जातौ) भ्रेति भ्रौ भगण-रगणौ त्रिना नगणत्रितयं ततो गो गुरुरेकः एभिः ऋषभगजविलसितं नाम छन्दोऽत्र स्वरात्सप्तभ्यः खं यतिः । इदञ्च सूत्रोक्तनवकयतेरप्युपलक्षणं पादान्ते यतेः स्वतः सिद्धेर्न तदुक्तिः ॥

अन्वयः—

भ्र त्रिनगैः ऋषभगजविलसितम् अत्र स्वरात्खं भवति ॥१॥

भाषार्थः—

भ्रेति एक भगण एक रगण तथा तीन नगण के अन्त में एक गुरु हो तो ऋषभगजविलसित छन्द होता है । और इसमें 'स्वर' सात के अन्त में यति होती है ॥

"वाणिनी न्जौ भ्जौ गौ" इति प्रा० पि० सू०

समन्वयः न० ज० भ० ज० गु०
I I I-I S I I-S S I S I S-S

नजभजरैः भवति वाणिनी गयुक्तैः ॥२॥

नेति नजभजरैः नगण-जगण भगण-जगण-रगणैर्गयुक्तैर्गुरुसहितै रचिता वाणिनी नाम छन्दो भवति । यथासम्भवं यतिः ॥

(टि०) १ यतिः ५—६ तोऽग्रे इत्यर्थः ।

अन्वयः—

नजभजरैः गयुक्तैः रचिता तदा वाणिनी भवति ।

भाषार्थः—

नेति यदि नगण जगण भगण जगण और रगण, अन्त में एक गुरु से युक्त हों तो वाणिनी छन्द होता है ॥

समन्वयः ज० र० ज० र० ज० गु०

। ऽ।-ऽ ।ऽ।ऽ।ऽ।ऽ। ऽ-।ऽ।ऽ

जरौ जरौ जगाविदं वदन्ति पञ्चचामरम् ॥२॥

जेति यत्र जरौ जगण रगणौ पुनः जरौ जगण रगणौ जगौ जगण-गुरू च इदं छन्दः पञ्चचामरं नाम छन्दोविद्वांसो वदन्ति कथयन्ति २। २ यतिर्यथेष्टम्वा ॥ चित्रसंज्ञमीरितं रजौ रजौ रगौ च वृत्तम् ॥ जरौ जरौ ततो जगौ च पञ्च चामरं वदेत् । संकथिता भरौ नरनगाश्च धीरललिता ॥ पञ्चभकारयुताऽश्वगतिर्यदि चान्त्यगुरुः ॥ * नजभभभेन गेन च स्या न्मणिकल्पलता ॥

अन्वयः—

यत्र जगौ जरौ जगौ च; इदं पञ्चचामरम् भवति ।

भावार्थः—

जेति जिसके आरम्भ में जगण-रगण तथा पुनः जगण-रगण और अन्त में जगण गुरु हों तो पञ्चचामर छन्द होता है ॥

मूलम्

—— o ——

रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥

दिङ्मुनि बंशपत्रपतितं भरनभनलगैः ॥

रसयुगहयैन्सौं म्रौ स्लौ गो यदा हरिणी तदा ॥
मन्दाक्रान्ता जलधिषडगैर्म्भौं नतौ ताद्गुरू चेत् ॥
यदि भवतो नजौ भजजला गुरुर्नर्कुटकम् ॥
मुनिगुहकार्णवैः कृतयतिं वद कोकिलकम् ।

---

"शिखरिणी न्सौ न्लौ भ्लौ गृतुरुद्राः" इति पि०सू०७।२०॥
समन्वयः य० म० न० स० भ० ल०गु०
। ऽ ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । । । ऽ
(अत्यष्ट्याम्) रसै रु[१]श्छिन्ना यमनसभला गः शिखरिणी॥ १ ॥

( अथ अत्यष्ट्यां १७ जातौ ) यत्र यमनसभलाः यगण-मगण-नगण-सगण-भगण-लघवो गो गुरुश्च स्युः सा रसैः षड्भिः रुद्रैरेकादशभिश्च छिन्ना कृतविरतिः शिखरिणी नाम छन्दः स्यात् ॥

अन्वयः—

यमनसभला गः शिखरिणी, सा च रसैः रुद्रैः छिन्ना भवति ।

भाषार्थः—

रसैरिति जिस में यगण मगण नगण, सगण भगण लघु और गुरु हों वह शिखरिणी नामक छन्द होता है, तथा इस में छः और ग्यारह के अन्त में यति होती है॥

"पृथ्वी ज्सौ ज्सौ य्लौ ग्वसुनवकौ" इति पि० सू० ७।१७
समन्वयः ज० स० ज० स० य० ल०गु०
। ऽ । । । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ
जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरु ॥ २ ॥

जेति यत्र जसौ जगण सगणौ जसयलाः जगण-सगण-यगण लघवो गुरुश्च सा वसुभिः अष्टभिस्ततो ग्रहैः नवभिश्च यतिर्यस्याः सा पृथ्वी नाम छन्दः ॥

---

(टि०) १ यतिस्तु ६—११ वर्णान्ते।

अन्वयः--

यत्र जसौ, जसयलाः गुरुः, वसुग्रहयतिश्च; सा पृथ्वी भवति ॥२॥

भाषार्थः--

जेति जिस में जगण सगण, पुनः जगण सगण तथा यगण लघु और गुरु हों, अथ च आठ और नौ में यति हो वह पृथ्वी नाम छन्द होता है ।

"वंशपत्रपतितं भ्रौ भ्नौ न्लौ ग् दिग्मृषयः" इति पि० सू० ७।८

समन्वयः भ० र० न० भ० न० ल०गु०

S I I - S I S-I I I-S I I I I I-I-S

दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥ ३ ॥

दिगिति भरनभनलगैः भगण-रगण-नगण-भगण नगण-लघु-गुरुभिः रचितं दिङ्मुनि दिशो दश मुनयः सप्त च यतेः स्थानत्वेन यत्र तत् वंशपत्रपतितं नाम छन्दः । यद्वा दिङ्मुनियति वंशपत्रपतितमिति मध्यमपदलोपि एकं पदम् ॥

अन्वयः—

भरनभनलगैः वंशपत्रपतितम्, अत्र दिङ् मुनि च यतिस्थानं भवति ॥

भाषार्थ.—

दिगिति जिस में भगण रगण नगण भगण नगण लघु और एक गुरु यह हों वह वंशपत्रपतितनामक छन्द होता है, तथा इस में दश और सात में यति होती है ॥

"हरिणी न्सौ भ्रौ स्लौ गृतुसमुद्रऋषयः" इति पि० सू० ७।१६

समन्वयः न० स० म० र० स० ल०गु०

I I I- I S- S S S- S I S-I I S I-S

रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ॥ ४ ॥

रसेति यत्र रसैः षड्भिस्ततो युगैश्चतुर्भिस्ततो हयैः सप्तभिर्यतिः तथा नसौ नगण-सगणौ म्रौ मगण-रगणौ स्लौ सगण-लघू गो गुरुश्च तदा हरिणी नाम छन्दः स्यात् ॥

---

(टि०) १ यति स्थाने १० । ७च । २ यतेः ६ । ४ । ७ स्थानानीत्यर्थः ॥

अन्वयः—

चेत् न्सौ म्रौ स्लौ गः, रसयुगहयैश्च यतिः, हरिणी भवति

भाषार्थः—

रसेति जब क्रमशः नगण सगण मगण रगण तथा सगण लघु और गुरु हों, तथा छः चार सात में क्रमशः यति हो, तब हरिणी नामक छन्द होता है ॥

"मन्दाक्रान्ता म्भौ न्तौ त्गौ ग समुद्रर्तुस्वराः" इति पि० सू०

समन्वयः म० भ० न० त० त० गु०२

ऽऽऽ-ऽ।।-।।।-ऽ ऽ।-ऽऽ।-ऽऽ

मन्दाक्रान्ता जलधिखडगैर्म्भौनतौ ताद्गुरू चेत् ॥५।

मन्देति चेद्यदि जलधिभिश्चतुर्भिः षड्भिः अगैः सप्तभिश्च यतिः तथा म्भौ मगण-भगणौ न्तौ नगण-तगणौ ततः ततः तगणात् गुरू च द्वौ स्यातां तदा मन्दाक्रान्ता नाम छन्दः ॥

अन्वयः—

चेत् म्भौ नतौ तात् गुरू, जलधिषडगैः यतिश्च तदा मन्दाक्रान्ता भवति ॥

भाषार्थः—

मन्देति यदि मगण भगण नगण और दो तगणों से परे दो गुरु हों, तथा चार छः और सात में क्रम से यति हो तो मन्दाक्रान्तानामक छन्द होता है ॥ ५ ॥

"अवितथं न्जौ भ्जौ ज्लौ ग्" इति पि० सू० ८।१४

समन्वयः न० ज० भ० ज० य०ल०गु०

।।।-।ऽ।ऽ।।-।ऽ।-ऽऽ।-।-ऽ

यदि भवतो नजौ भजयला गुरुर्नर्कुटकम् ॥ ६ ॥

यदीति यदि नजौ नगण-जगणौ भवतः ततो भजयलाः भगण-जगण-यगण-लघवः ततो गुरुश्च स्यात् तदा नर्कुटकं नाम छन्दः। पैङ्गले तु गाथाभेदत्वेन "अवितथं न्जौ भ्जौ ज्लौ ग्" इत्युक्तम् ॥

---

(टि०) १ यतेः ४।६।७ स्थानानीत्यर्थः सू० ७।१७॥

अन्वयः—

यदि नजौ भवतः; ततः भजयला गुरुश्च, तदा नर्कुटकं भवति ॥ ६ ॥

भाषार्थः—

**यदी**ति यदि नगरा और जगण हों, तथा इन से परे भगण जगण यगण लघु और गुरु हों तब नर्कुटकनामक छन्द होता है ॥ ६ ॥

"वस्विंन्द्रियसमुद्राश्चेत्कोकिलकम्" इति पि० सू० ८। १४

**समन्वयः**

मुनिगुहकार्णवैः कृतयतिं वद कोकिलकम् ॥ ७ ॥

**मुनी**ति इमं नर्कुटकाख्यं मुनिगुहकार्णवैः मुनिभिः सप्तभिः गुहकै-रिति गुहः कार्तिकेयस्तस्य कानि मुखानि षट् तैर्गुहकैः षड्भिः अर्णवै-श्चतुर्भिश्च कृता यतिर्यत्र तत मुनिगुहकार्णवैः कृतयतिः तं छन्दोभेदं तदा त्वं कोकिलकं ना[illegible] वद कथय। "कं शिरोम्बुनोः"। इत्यमरः। पैङ्गले तु गाथाप्रकरणे "वस्विन्द्रियसमुद्राश्चेत्कोकिलकम्" इत्युक्तम्॥ रसयुगहरिभिर्युङ्नौ म्रौ सो लगौ हि यदा हरिः। भवेत्कान्ता युगरसहयैर्यभौ नरसा लगौ॥ससजा भजगास्तु दिक्स्वरैर्भवति चित्रलेखा॥ १ ससजैरतिशायिनी मता भजपरैर्गुरुभ्याम्॥

अन्वयः—

मुनिगुहकार्णवैः कृतयतिं कोकिलकं वद।

भाषार्थः—

**मुनी**ति जिसमें सात गुह (कार्तिकेय) के (क) मुखों की संख्या छः और चार से परे यति हो, तो हे शिष्य! उसका नाम तुम नर्कुटक कहो, परन्तु पिङ्गलाचार्य ने इसे समवृत्तों में न लिखकर गाथाप्रकरण में लिखा है, तथा आठ पांच चार से यति निर्दिष्ट की है ॥७॥

---

(टि०) १ यतः ८। ६। ४। स्थानानीत्यर्थः।

मूलम्

स्याद्भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ ॥

"कुसुमितलतावेल्लिता म्तौ न्यौ याविन्द्रियर्तुस्वराः"

(७। ७। इति पि० सू०)

समन्वयः म० त० न० य० य० य०

S S S-S S I-I-I I-I S S-I S S-I S S

(धृतौ) स्याद्भूतर्त्वश्वैः कुसुमितलता वेल्लिता म्तौ नयौ यौ ॥१॥

(धृत्यां १८ जातौ) यत्र भूतर्त्वश्वैः पञ्च-षट्-सप्तभिर्यतिः म्तौ मगण-तगणौ नयौ नगण-यगणौ यौ द्वौ यगणौ च स्यातां सा कुसुमितलतावेल्लिता नाम स्यात् ॥ मात्सो जौ भरसंयुतौ करि (८) बाण (५) कै (५) र्हरिणप्लुतम् ॥ यदिहनयुगलं ततो वेदरेफैर्महामालिका ॥ कथितमिह रौ चेद्रौ सिंहविक्रीडितम् ॥ पञ्चभकार कृताऽश्वगतिर्यदिचान्तसरचिता ॥ सुधा तर्कैस्तर्कै(६) र्भवति ऋतुभिर्यो मो नसतसाः॥ वर्णाश्वैर्मननततमकैः कीर्तिता चित्रलेखेयम्। भाद्रनना नसौ भ्रमरपदकमिदमभिहितम् ॥ शार्दूलं वद मास (१२) षट्कयति मः सौ जसौ रो मश्चेत्॥ अर्था चाश्वैर्मभनयरयुगैरवृत्तं मतं केशरम् ॥ म्भौ न्जौ भ्रौ चेच्चलमिदमुदितं युगैर्मुनिभिः स्वरैः ॥ *दशवसुविरतिर्ननौ रैश्चतुर्भिर्युता सालसा॥ *अधिकं दर्शयति ॥ ननौ रौ भवेतां ररौ तारकाणं॥ स्याद्भूतर्त्वश्वैर्मौ भ्मौ विरतिश्चेत्सिंहविस्फूर्जितं यौ ॥ सौं जौ भरसंयुतौ करिवाणकैः खं हरनर्तनम् ॥

---

(टि०) १ यतेः ६। ६। ७ स्थानानीत्यर्थः।

अन्वयः—

चेत् म्तौ नयौ यौ, भूतर्त्वश्वैश्च यतिः तदा कुसुमितलतावे-ल्लिता स्यात्।

भाषार्थः—

स्यादिति जिसमें मगण तगण, नगण यगण और २ यगण हों; तथा पांच छः और सात से परे यति हो वह कुसुमितलतावेल्लितानामक छन्द होता है॥

मूलम्

—०—

**रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुता मेघविस्फूर्जिता स्यात्॥**
**सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्॥**

---

"मेघविस्फूर्जिता य्मौ न्सौ रौ ग् रसर्त्वश्वैर्यतिः" इति प्रा० पि० सू०

समन्वयः य० म० न० स० र० र० गु०

I S S · S S S — I I I I S — S I S — S I S S

(अतिधृतौ) रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुता मेघविस्फूर्जिता स्यात्॥१॥

अथ (अतिधृत्यां १९ जातौ) रसेति यत्र य्मौ यगण-मगणौ न्सौ नगण-सगणौ स्याताम् सा ररगुरुभिः रगण रगण गुरुभिर्युत रसैः षड्भिः ऋतुभिः पुनः षड्भिः अश्वैः सप्तभिश्च कृतविरामा मेघविस्फूर्जिता स्यात्॥

अन्वयः—

यत्र रसर्त्वश्वैः यतिः, य्मौ न्सौ च, ररगुरुयुता सा मेघविस्फू-र्जिता स्यात्॥

भाषार्थः—

रसेति जिसमें छः छः और सात में यति की गई हो तथा जिसमें एक एक यगण मगण नगण और सगण दो रगण तथा एक गुरु हो उस छन्द का नाम मेघ-विस्फूर्जिता होता है॥

"शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्यऋषयः"

इति पि० सू० ७।२२

समन्वयः म० स० ज० स० त० त० गु०

S S S-I I S-I S I-I I S—S S I-S S I-S

सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम् ॥२॥

सूर्येति यत्र मसजस्तताः मगण सगण–जगण सगण-तगण तगणाः सगुरवः गुरुसहिताः तत् सूर्याश्वैः द्वादश-सप्तभिः कृतविरामं शार्दूल-विक्रीडितं नाम छन्दः स्यात् ॥ नयुगललगुरु निरन्तरं यदा स चामरः॥ भूताश्वाश्वान्तं मतनसररगैः कीर्तितं पुष्पदाम ॥ वृत्तं विम्वाख्यं शरमुनितुरगैम्तौं न्सौ ततौ चेद्गुरु ॥ इयं छाया ख्याता ऋतु-रसहयैर्यो मनसा भ्तौ गुरु ॥ रसैः षड्भिर्लोकैर्यमनसजजा गुरुर्मकरन्दिका ॥ युगाश्वैः स्याद्यभनयजजगाः कीर्तिता मणि-मञ्जरी ॥ गजाब्धितुरगैर्जसौ जसतभा गश्चेत्समुद्रतताः ॥ नज-भयसा जगौ च रचना शूलिककुद्भिरत्र सा ॥ भौं जतौ तौ सगुरुकौ यदा दिग्ग्रहच्छेदभाग्भवति ॥

अन्वयः—

चेत् सगुरवः मसजस्तताः सूर्याश्वैः यतिश्च तदा शार्दूलविक्री-डितं भवति ॥

भाषार्थः—

सूर्येति जिसमें मगण सगण जगण सगण और दो तगण यह सब अन्त में एक गुरु से युक्त हों तथा बारह, और सात में यति हो, वह शार्दूलविक्रीडित नामक छन्द होता है॥

मूलम्

——:o:——

ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना ॥

---

(टि०) १ यतिः १२। ७ स्वरतः।

त्री रजौ लगौ भवेदिहेद्दशेन लक्षणेन वृत्तनाम ॥

---

"सुवदना म्रौ भ्नौ।य्भौ ग्लावृषिस्वरर्त्तवः" इति पि० सू० ७।२२

समन्वयः म० र० भ० न० य० भ० ल० गु०

S S S-S । S-S । ।-। । ।-। S S- S । । । S

(कृतौ) ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना ॥ १

अथ ( कृत्यां २० जातौ ) ज्ञेयेति मरभनयैर्युता मगण रगण-भगण नगण-यगणैः सहिता ततो भ्लौ भगण-लघू गो गुरुश्च स्यात् यत्र सप्ताश्वषड्भिः सप्तभिः अश्वैः सप्तभिः षड्भिश्च यतिः सा सुवदना ज्ञेया ।

अन्वयः--

या मरभनययुता, ततः भ्लौ गः, सप्ताश्वषड्भिः यतिश्च सा; सुवदना ज्ञेया ॥१॥

भाषार्थः—

ज्ञेयेति जो मगण रगण भगण नगण और यगण से युक्त हो, जिसके अन्त में भगण लघू और गुरु हों सात सात छः से आगे जिसमें यति हो वह सुवदना नामक छन्द होता है ॥१॥

"ग्लिति वृत्तम्" इति पि० सू० ७।२४ ॥

समन्वयः र० ज० र० ज० र० ज० गु० ल०

S । S-। S । S । S-। S । -S । S-। S । S-।

त्री रजौ गलौ भवेदिहेद्दशेन लक्षणेन वृत्तनाम ।२॥

त्रिरिति यत्र त्रिवारं रजौ रगण जगणौ ततो गलौ गुरु लघू च स्याताम् इह शास्त्रे ईद्दशेन लक्षणेन वृतं नाम यस्य तत् छन्दो भवेत् ।

---

(टि०) १ यतः ७।७।६ स्थानानीत्यर्थः । २ यावद्भिर्वर्णैर्वृत्तं पूर्य्यते तावन्ति गुरुलघ्वक्षराणि यत्र तद् वृत्तं नाम छन्दः इत्यर्थः ।

पादान्ते यतिः॥ रसैरश्वैरश्वैर्यमननततगैर्गेन शोभेययुक्ता ॥ *ख्याता पूर्वैः सुवंशा यदि मरभना स्तद्द्वयं गौ गुरुश्च ।।सभरा न म्यलगिति त्रयोदशयतिर्मत्तेभविक्रीडितम् ॥ सजजा भरौ सलगाश्च चेदुदितं तदा प्रमदाननम् ॥

अन्वयः —

यत्र त्री रजौ गलौ च, इहेदृशेन लक्षणेन वृत्तनाम छन्दो भवेत् ॥२॥

भाषार्थः –

त्रिरिति जिस में तीन बार रगण और जगण आवें, अन्त में एक गुरु और एक लघु हो ( तथा पादान्त में यति हो ) तो ऐसे लक्षण से युक्त छन्द का नाम इस जगत् में वृत्त होता है ॥ २ ॥

मूलम्

---

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्॥

---

"स्रग्धरा म्रौ भ्नौ यौ यू त्रिसप्तकाः" इति पि० सू० ७।२५॥

समन्वयः म० र० भ० न० य० य० य०

ऽ ऽ ऽ-ऽ । ऽ-ऽ । । । । । । । ऽ ऽ-। ऽ ऽ । ऽ ऽ

(प्रकृतौ) म्रभ्नैर्यानां त्रयेण त्रिमुनि यतियुता स्रग्धरा कीर्तितेयम् १

अथ (प्रकृत्यां२२ जातौ) म्रेति या म्रभ्नैः मगण-रगण भग णनगणै-स्ततो यानां त्रयेन त्रिभि यगणै रचिता त्रिमुनियति युता त्रयश्च मुनयः सप्त च तैर्या यतिर्विरतिः तया युता त्रिभिस्ततः सप्तभिर्विरामसमेतेति यावत् इयं स्रग्धरा कीर्तिता उक्ता॥ सलिलनिधिर्भवेदिह नजौ भगणो जगणास्त्रयश्च रः॥भवति नजौ हि सिद्धिरिति भाज्जजा यदि रो भविता ॥

अन्वयः—

या म्रभ्नैः, यानां त्रयेण, त्रिमुनियतियुता, इयं स्रग्धरा कीर्तिता ॥

भाषार्थः—

म्रति जो १–१ मगण रगण भगण नगण और, तीन यगणों से, तथा तीन और सात की यति से युक्त हो, वह स्रग्धरानामक छन्द होत्ता है ॥

(मूलम्)

---

भ्रौ नरना रनावथ गुरुर्दिगर्कविरमं हि भद्रकमिदम् ।

---

"भद्रकं भ्रौ नौं नौं न्गौ दिगादित्याः" इति पि० सू० ७।२६

समन्वयः भ० र० न० र० न० र० न० गु०

S । ।-S । S-। । ।-S । S-। ।।-S । S-। । । ।

आकृतौ) भ्रौ नरना रनावथ गुरुर्दिगर्कविरमं हि भद्रकमिदम् ।२।

(अथ आकृत्यां २२ जातौ)भ्राविति यत्र भ्रौ भगण-रगणौ ततो नरना नगण-रगण-नगणा रनौ रगण-नगणौ अथ अनन्तरं गुरुः। इदं दिगर्क-विरमं दिगर्कैः दशभिर्द्वादशभिश्च विरमो यतिः यत्र तत् भद्रकं नाम छन्दः। अत्र हि इति पदं पादपूरणे ॥ सप्तभकारकृतावसितौ सगुरुः कविभिः कथिता मदिरा ॥ * लालित्यं भुजगेन्द्रेण भाषित-मेतच्चेन्मसरस्तजनगुभिः ।। * सजता नसौ ररौ गः फणितुर-गहयैः स्यान्महास्रग्धराख्या । भौ भभभाश्च भरौ यदि कीर्तय पुत्रकमत्तविलासिनीम् ॥ २ ॥

अन्वयः—

यत्र भ्रौ, नरना, रनौ. अथ गुरुः, दिगर्कविरमं, इदं हि प्रभद्रकं भवति ॥

भाषार्थः—

भाविति जिस में क्रमशः भगण रगण नगण, रगण नगण नगण तथा एक गुरु हों तथा दश और बारह से आगे यति हो, वह प्रभद्रक नामक छन्द होता है ॥

(मूलम्)

यदिह नजौ भजौ भजभलगास्तदाऽश्वलालितं हरार्कयति तत्॥ मत्ताक्रीडा मौ त्नौ नौ न्लौ गिति भवति वसुशरदशयतियुता॥

'अश्वललितं न्जौ भ्जौ भ्जौ भ्लौ ग्रुद्रादित्या' इति पि० सू० ७।२७

समन्वयः

न० ज० भ० ज० भ० ज० भ० ल० गु०

। । । । ऽ । - ऽ । । - । ऽ । - ऽ । । - । ऽ । ऽ । । - । - ऽ

(विकृतौ) यदिह नजौ भजौ भजभलगास्तदाश्वललितं हरार्कयति तत्

(विकृत्यां २३ जातौ) यदिह शास्त्रे नजौ नगण-जगणौ ततो भजौ भगण-जगणौ भजभलगा भगण-जगण-भगण लघु-गुरवश्च स्युस्तत् हरार्कयति हरैरेकादशभिः अर्कैर्द्वादशभिर्यतिर्विरामो यत्र तत् अश्वललितं नाम छन्दः स्यात्॥

अन्वयः--

इह यत् नजौ भजौ भजभलगाः, तदा तत् हरार्कयति अश्वललितं भवति।

भाषार्थः--

यदिति जिस छन्द में क्रमशः नगण जगण भगण जगण भगण जगण भगण लघु और गुरु हों, तथा ग्यारह और बारह से यति हो, वह अश्वललितनामक छन्द होता है॥

'मत्ताक्रीडा मौ त्नौ नौ न्लौ ग् वसुपञ्चदशकौ' इति पि० सू० ७।२८

समन्वयः

म० म० त० न० न० न० न० ल० गु०

ऽ ऽ ऽ - ऽ ऽ ऽ - ऽ ऽ । - । । । - । । । - । । । - । । । - । - ऽ

मत्ताक्रीडा मौ त्नौ नौ न्लौ गिति भवति वसुशरदशयतियुता॥२॥

मत्तेति यत्र मौ द्वौ मगणौ त्नौ तगण-नगणौ नौ द्वौ नगणौ ल्गौ नगण-लघू ग् गुरुश्च इति लक्षणेन वसुशरदशयतियुता ष्टपञ्चदश भिर्यतिस्तया सहिता मत्ताक्रीडा नाम छन्दः ॥ *भैरथ सप्तभिरत्रकृता गुरुणा च तु मत्तमयूरगतिः स्यात्।

अन्वयः--

यत्र मौ नौ त्नौ न्लौ ग्, इति वसुशरदशयतियुता मत्ताक्रीडा भवति ।१।

भाषार्थः--

मत्तेति जिस में २ मगण १ तगण ४ नगण १ लघु और १ गुरु यह क्रम से हों, और आठ, पांच और दश में यति से युक्त हो, तो यह मत्ता क्रीडा नाम छन्द होता है ॥ (मूलम्)

---

# भूतमुनीनैर्यतिरिह भतना स्भौ भनयाश्च यदि भवतितन्वी

---

## (संकृतौ) "तन्वी भ्तौ न्सौ भौ न्याविन्द्रियस्वरमासाः"

इति पि० सू० ७ । २५ ॥

समन्वयः भ० त० न० स० भ० भ० न० य०
ऽ।।-ऽऽ।-।।।-।।ऽ-ऽ ।।-ऽ।।-।।।-।ऽऽ

[संकृतौ] भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति तन्वी

अथ (सङ्कृत्यां २४ जातौ) इह छन्दोजातौ यदि भतना भगण तगण-नगणाः स्भौ सगण-भगणौ भनया-भगण-नगण यगणाश्च भवेयुस्तदा तन्वी नाम छन्दो भवति । इह भूतमुनीनैः भूतानि पञ्च मुनयः सप्त इनाः सूर्या द्वादश तैर्यतिः कार्या ॥

अन्वयः—

इह यदि भतनाः स्भौ भनयाः, भूतमुनीनैश्च यतिः स्यात् तदा तन्वी भवति ॥

भाषार्थः—

भूतेति जिस में यदि क्रमशः भगण तगण नगण और सगण भगण तथा भगण नगण यगण यह मिलें और 'भूत' पांच 'मुनि' सात 'इन' (सूर्य) बारह इन से यति हो तो उस छन्द का नाम तन्वी होता है ॥

मूलम्

क्रौञ्चपदा भ्मौ स्भौ नननना न्गाविषुशरवसुमुनिविरतिरिह भवेत् ॥

"क्रौञ्चपदा भ्मौ स्भौ नौ नौ ग् भूतेन्द्रियवस्वृषयः"

इति पि० सू० ७ । ३०

समन्वयः (अभिकृतौ)

भ० म० स० भ० न० न० न० न० गु०

S I I–S S S–I I S–S I I I I I–I I I–I I I–I I I–S

क्रौञ्चपदा भ्मौ स्भौ नननना न्गाविषुशरवसुमुनिविरतिरिह भवेत्

अथ (अभिकृत्यां २५ जातौ) इह शास्त्रे यदि भ्मौ भगण-मगणौ स्भौ सगण-भगणौ नननाः त्रयो नगणा न्गौ नगण-गुरू च स्याताम् । इषुभिः शरैः पञ्चभिः २ वसुभिरष्टभिर्मुनिभिः सप्तभिश्च विरतिर्यस्यां सा क्रौञ्चपदा नाम छन्दो भवेत् ॥

अन्वयः—

इह यत्र भ्मौ, स्भौ, नननना, न्गौ, इषुशरवसुमुनिविरतिश्च स्यात् सा क्रौञ्चपदा भवेत् ॥

भाषार्थः—

क्रौञ्चेति जिस में क्रमशः भगण मगण सगण भगण चार नगण और एक गुरु, यह हों, तथा 'इषु' पांच 'शर' पांच 'वसु' आठ 'मुनि' सात इन से यति (विराम) हो, उसका नाम इस शास्त्र में क्रौञ्चपदा होता है (कहा है) ॥

(मूलम्)

---

वस्वीशाश्वच्छेदोपेतं ममतनयुगनरसलगैर्भुजङ्गविजृम्भितम् ॥ मो नाः षट् सगागिति यदि नवरसरसशरयतियुतमपवाहाख्यम् ॥

---

"भुजङ्गविजृम्भितं मौ नौ सौ ल्गौ वसुरुद्रर्षयः"

इति पि० सू० ७ । ३१ ॥

समन्वयः [ उत्कृतौ ]

म० म० त० न० न० न० र० स० ल० गु०

ऽ ऽ ऽ ऽ ऽ ऽ-ऽ ऽ ।-। । ।-। । ।-। । ।-ऽ । ऽ-। । ऽ- ।-ऽ

वस्वीशाश्वच्छेदोपेतं ममतनयुगनरसलगैर्भुजङ्गविजृम्भितम् ॥ १ ॥

अथ ( उत्कृत्यां २६ जातौ ) ममतैर्मगण-मगण-तगणैस्ततो नयुगेन नगणयुगलेन ततो नरसलगैर्नगण-रगण-सगण-लघु-गुरुभी रचितं तथा वस्वीशाश्वैः अष्टैकादशसप्तभिश्छेदो विरामस्तेनोपेतं युक्तं भुजङ्गविजृम्भितं नाम छन्दो भवति ॥

अन्वयः—

ममतनयुगनरसलगैः, वस्वीशाश्वच्छेदोपेतं भुजङ्गविजृम्भितं भवति ॥

भावार्थः

**वस्वि**ति जो क्रम से दो मगण एक तगण तीन नगण एक एक रगण लघु और गुरु से, तथा आठ ग्यारह और सात की यति से युक्त हो, वह भुजंगविजृम्भित नामक छन्द होता है ॥

"अपवाहको म्नौ नौ नौ न्सौ गौ नवर्तुरसेन्द्रियाणि"

इति पि० सू० ७ । ३१ ॥

समन्वयः

म० न० न० न० न० न० न० स० गु०गु०

ऽ ऽ ऽ- ।।।-। ।।-।।।-।।-।।।-।।।-।।ऽ-ऽ-ऽ

मो नाः षट् सगगिति यदि नवरसरसशरयतियुतमपवाहाख्यम् २

म इति यदि म एको मगणस्ततो ना नगणाः षट् ततः सगग् सगणो गुरुद्वयमित्यमुना प्रकारेण नवरसरसशरैः नवषट्षट्पञ्चभिर्या यतिस्तया युतमुपेतम् अपवाहाख्यम् अपवाह इति आख्या नाम यस्य तत् छन्दः स्यात् ।। २६ ।।

अन्वयः—

यदि मः, षट् नाः, सगग्, इति स्युः, तदा नवरसरसशरयतियुतम् अपवाहाख्यं छन्दो भवति ।।

भाषार्थः—

म इति जिस में एक मगण, छः नगण, एक सगण तथा दो गुरु हों, तथा जो नौ छः छः और पांच पर यति से युक्त हो, वह अपवाहनामक छन्द होता है ।।

इति समवृत्तप्रकरणम् ।

(मूलम्)

अथ दण्डकाः ।

यदिह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः ।। प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः । प्रचितकसमाभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः ।।

---

"दण्डको नौ रः" ७। ३२ ।। प्रथमश्चण्डवृष्टिप्रपातः" ७। ३४ ।।अन्यत्र रातमाण्डव्याभ्याम्।। इति पिं सू० ७। ३५

---

(टि०) १ यत्र पादे द्वौ नगणौ ततः सप्त रगणाः ( पूर्वतो यथाक्रममेकैकाक्षरवृद्धितो लब्धमिदम् ) २ इति बहुवचनेन इतोग्रेऽपि एकैकरगणवृद्ध्या प्रस्तारः ।। २ तत्र प्रथमस्य नाम चण्डवृष्टिप्रपात इति अन्येषां तु यथाशिष्टवचनम् ।।

समन्वयः

न० न० र० र० र० र० र० र० र०

। । ।-। । ।-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ

यदिह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः १

अथ चण्डवृष्ट्यादिकदण्डकानाह-यदिहेति। यदिति यदेत्यर्थेऽव्ययम् इह दण्डकजातौ आदौ नयुगलं नगणद्वयम् ततः सप्तरेफाः सप्त रगणास्तदा चण्डवृष्टिप्रपातो नाम दण्डको भवेत् चत्वारोपि पादा ईदृशेन लक्षणेन कर्तव्या.। इयं च संज्ञा रातमाण्डव्यव्यतिरिक्तपिङ्गलादिमतेन। तदुक्तं तत्र अन्यत्रेति॥

अन्वयः—

इह यत् नयुगलं, ततः सप्तरेफाः,तदा चण्डवृष्टिप्रपातो दण्डको भवति।

भाषार्थः—

यदिति जब दो नगण तथा सात रगण हों, तो चण्डवृष्टिप्रपात नामक प्रथम दण्डक होता है॥ १॥

न० न० र० र० र० र० र० र० र० र०

। । ।-। । ।-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ-ऽ । ऽ ऽ । ऽ ऽ । ऽ-ऽ । ऽ

प्रतिचरणविवृद्धरेफाःस्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः

प्रतीति तथात्र प्रतिचरणं विवृद्धरेफा इति। यदा दण्डकं दण्डकं प्रति पादे पादे एकैकरगणवृद्धिः क्रियते तदा अमूनि नामानि दण्डकानां पृथक् २ स्युः। आदौ सर्वत्र नगणद्वयमेव कार्यम्। ततश्चादौ द्वौ नगणौ ततः अष्टौ रगणास्तदा अर्णो नाम दण्डकः स्यात्। एवं प्रतिचरणं रगणवृद्धौ नवभिरर्णवो नाम, दशभिः रगणैर्व्यालः, एकादशभिः रगणैर्जीमूतो नाम,द्वादशभिः रगणैर्लीलाकरः,त्रयोदशभिः रगणैरुद्दामा,तथा पादे पादे आदौ द्वौ नगणौ ततश्चातुर्दश रगणास्तदा शङ्खो नाम दण्डको भवति। आदिशब्दात्पथ (?) गगनसमुद्रादयोऽपि शिष्टकृतनामानो गृह्यन्ते रगणवृद्धिरपि कर्तव्या। सिंहसमुद्रभुजङ्गादय इति रामचन्द्र बौद्धः। आराम-संग्राम सुराम-वैकुण्ठ-सोत्कण्ठ-सार-कासार-विस्तारादय एकोनसहस्राक्षरपर्यन्तमिति नारायणभट्टः। तदुक्तम्:—

---

(टि०)१ग्रन्थान्तराविरोधाय प्रतिचरणेष्वित्यर्थः कार्यः नतु प्रतिचरणं विवृद्धा रेफा इति॥

एकोनसहस्राऽक्षरपर्यन्ता दण्डकाङ्घ्रयः प्रोक्ताः।
वर्णैस्त्रिकगणवृद्ध्या नद्वितयाद्या महामतिभिः॥

अन्वयः—

प्रतिचरणविवृद्धरेफाः, अर्णाऽर्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः स्युः॥

भाषार्थः

प्रतीति सब दण्डकों के प्रत्येक पाद के आरम्भ में दो नगण हों, तथा एक २ करके रगणों की संख्या बढ़ाई जावे, तो अर्ण अर्णव व्याल जीमूत लीलाकर उद्दाम शङ्ख। तथा आदि पद से गगन समुद्र वैकुण्ठ इत्यादिक संज्ञाएं होती हैं। अर्थात् आरम्भ में दो नगण के अनन्तर आठ रगण हों तो अर्ण नौ रगण हों तो अर्णव, दस हों तो व्याल, ग्यारह हों तो जीमूत, बारह हों तो लीलाकर, तेरह हों तो उद्दाम, चौदह हों तो शङ्ख इत्यादिक संज्ञाएं हजार अक्षर के पाद तक कविप्रयोगानुसार बढ़ती जाती हैं परन्तु आरम्भ में सब के दो नगण अवश्य होने चाहिये॥

"शेषः प्रचितक" इति पि० सू० ७। ३६॥

समन्वयः

न० न० य० य० य० य० य० य० य०

।।।-।।।-। ऽ ऽ-। ऽ ऽ—। ऽ ऽ । ऽ ऽ।ऽऽ।ऽ ऽ-। ऽऽ

प्रचितकसमभिधो धीरधीभि स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः

इति भट्टकेदारविरचिते वृत्तरत्नाकराख्ये छन्दोग्रन्थे समवृत्ताध्यायस्तृतीयः समाप्तः॥

प्रचितकेति तथा नगणद्वयादुत्तरैः अग्रेभवैः सप्तभिर्यैः यगणै रचितो धीरधीभिः पण्डितैः प्रचितकसमभिधो नाम दण्डकः कथितः। अत्रापि पूर्ववदेव एकैकयगणवृद्ध्या दण्डकाः। कार्याः यैरित्युपलक्षणं गणमात्रस्य कविप्रयोगानुरोधात्, वृत्यानुकूल्यमत्रविचार्य्यम्।

इति वृत्तरत्नाकराख्यछन्दोग्रन्थस्य रत्नसंग्रहव्याख्यायां समवृत्ताध्यायस्तृतीयः समाप्तः॥

(टि०) १ चण्डवृष्टिप्रपातादन्यः, यत्र रगणोपलक्षितगणमात्रवृद्धिरिति भावः॥

अन्वयः—

नद्वयात् उत्तरैः सप्तभिः यैः, धीरधीभिः प्रचित कसमभिधः दण्डकः स्मृतः ॥

भाषार्थः—

प्रति दो नगणों से परे सात यगण हों तो इस दंडक का धीरबुद्धिवान् पण्डितपुरुषों ने प्रचितक नाम कहा है ॥

इति श्रीवृत्तरत्नाकराख्य–छन्दग्रन्थ पर रत्नसंग्रह में भाषाप्रभाकर टीका का तृतीय अध्याय समाप्त हुआ ॥ शुभम्



## अथार्द्धसमवृत्तलक्षणाध्यायः

(मूलम्)

विषमे यदि सौ सलगा दले । भौ युजि भाद्गुरुका-वुपचित्रम् ॥ भत्रयमोजगतं गुरुणी चेत् । युजि च नजौ ज्यवुतौ द्रुतमध्या ॥ सयुगात्सगुरू विषमे चेत् ॥ भाविह वेगवती युजि भाद्गौ ॥ ओजे तपरौ जरौ गुरुश्चेद् । म्सौ ज्गो भद्रविराड् भवेदनोजे ॥ असमे सजौ सगुरुयुक्तौ । केतुमती समे भरनगाद् गः ॥ आख्यानकी तौ जगुरू ग ओजे । जतावनोजे जगुरू गुरुश्चेत् ॥ जतौ जगौ गो विषमे स्यात् । तौ ज्गौ ग एषा विपरीतपूर्वा ॥ सयुगात्सलघू विषमे गुरुः । युजि नभौ च भरौ हरिणप्लुता । अयुजि ननरला गुरुः समे । न्जमपरवक्त्रमिदं ततो जरौ ॥ अयुजि नयुगरेफतो

यकारो। युजि च नजौ जरगाश्च पुष्पिताग्रा॥

वदन्त्यऽपरवक्त्राख्यं वैतालीयं विपश्चितः। पुष्पिताग्रा-भिधं केचिदौपच्छन्दसिकं परे॥ स्यादयुग्मके रजौ रजौ समे तु। जरौ जरौ गुरुर्यदा यवान्मतीयम्॥

अर्द्धे ५।२१ इत्यधिकृत्य "उपचित्रकं सौ स्लौ ग्, भौ भ्गौ ग्"

इति पि० सू० ५।३२॥

समन्वयः

स० स० स० ल० गु० भ० भ० भ० गु०२

।।ऽ-।।ऽ—।। ऽ-।-ऽ---ऽ।।—ऽ।।-ऽ।।-ऽ-ऽ

विषमे यदि सौ सलगा दले। भौ युजि भाद्गुरुकावुपचित्रम्।१।

इदानीमर्धसमवृत्ताध्यायो व्याख्यायते विषमेति य दि विषमे दले प्रथमे तृतीये च पादे सौ द्वौ सगणौ ततः सलगाः सगण-लघु-गुरवो भवन्ति। पुनर्यदा युजि समे दले द्वितीये चतुर्थे च पादे भौ द्वौ भगणौ ततो भाद् भगणात् गुरुकौ द्वौ गुरू (स्वार्थे कः) भवतस्दा उपचित्रं नाम छन्दः। अत्र तृतीयपादः प्रथमपादसदृशः। चतुर्थपादो द्वितीय पादसदृशः। एवं सर्वत्राऽर्धसमच्छन्दसि ज्ञेयम्। अर्धसमत्वाद्द्वि-तीयार्द्धमप्येवमेवोदाहार्य्यम्। अत्रानुक्ते यथासम्भवं यतिः।

अन्वयः—

यदि विषमे दले सौ, सलगा, युजि च भौ (ततः) भात् गुरुकौ तदा उपचित्रं भवति॥

भाषार्थः—

**विषम** इति- यदि प्रथम-तृतीय रूप विषम पादों में तीन सगण एक लघु और एक गुरु हों, एवं द्वितीय-चतुर्थ रूप समपादों में तीन भगणों से परे दो गुरु हों, तो उपचित्रा नामक छन्द होता है॥

"द्रुतमध्या भौ भौ ग् न्जौ ज्यौ" इति पि० सू०५।३३

समन्वयः

भ० भ० भ० गु०२ न० ज० ज० य०

S।।-S।।-S।।-S S——-।।।-।S।-।S।-।SS

भत्रयमोजगतं गुरुणी चेत् । युजि च नजौ ज्ययुतौ द्रुतमध्या ।.२॥

भेति चेद्यदि ओजगतं विषमपादे स्थितं भत्रयं भगणत्रयं प्रथमं ततो गुरुणी गुरुद्वयं च । पुनः युजि समे पादे न्जौ नगण-जगणौ ज्ययुतौ जगण-यगणाभ्यां सहितौ भवेतां तदा द्रुतमध्या नाम छन्दो भवति ॥२॥

अन्वयः—

चेत् ओजगतं, भत्रयं, गुरुणी च, युजि ज्ययुतौ नजौ च तदा द्रुतमध्या भवति ॥२॥

भाषार्थः—

भेति यदि विषमपादों में तीन भगण तथा दो गुरु हों, एवं समपादों में एक नगण दो जगण तथा एक यगण हो तो द्रुतमध्या नामक छन्द होता है ॥२॥

"वेगवती सौ स्गौ भौ भ्गौ ग्" इति पि०सू० ५।३३ ॥

समन्वयः

स० स० स० गु० भ० भ० भ० गु०२

।।S-।।S-।।S-S S।।-S।।-S-।।-SS

सयुगात्सगुरू विषमे चेत् । भाविह वेगवती युजि भाद्गौ ॥३॥

सेति चेद्यदि विषमे पादे सयुगात् सगणयुग्मात् सगुरू सगण गुरू भवतः ॥ युजि समे पादे भौ द्वौ भगणौ ततः पुनर्भात् भगणात् यदि द्वौ गुरू भवतस्तदा इह शास्त्रे वेगवती नाम छन्दो भवति ॥३॥

अन्वयः—

चेत् विषमे सयुगात्सगुरू, युजि भौ भात् गौ च तदा इह वेगवती भवति ॥३॥

भाषार्थः—

सेति यदि विषमपादों में दो सगणों से परे एक सगण तथा एक गुरु हो,

एवं समपादों में तीन भगणों से परे दो गुरु हों तो इस शास्त्र में वेगवती नाम करके छन्द होता है ॥३॥

"भद्रविराट् त्जौ गौ म्सौ ज्गौ ग्" इति पि० सू० ५। ३५

समन्वयः

त० ज० र० गु० म० स० ज० गु०२

S S I-I S I S I S-S S S S-I I S—I S I-S S

ओजे तपरौ जरौ गुरुश्चेत् । म्सौ ज्गौ भद्रविराड् भवेदनोजे ॥४॥

चेदिति चेद्यदि ओजे विषमे पादे तपरौ तगणात्परौ जरौ जगण-रगणौ गुरुश्च भवति । अनोजे समे पादे म्सौ मगण-सगणौ ज्गौ जगण गुरू च भवतः तदा भद्रविराड् नाम छन्दो भवेत् ॥४॥

अन्वयः—

चेत् ओजे तपरौ जरौ गुरुश्च, अनोजे म्सौ ज्गौ च तदा भद्रविराट् भवेत् ॥४॥

भाषार्थः—

ओज इति यदि विषमपादों में तगण से परे जगण रगण और गुरु हों तथा समपादों में मगण सगण जगण और दो गुरु होंतो तब भद्रविराट् नामक छन्द होता है ।

"केतुमती स्जौ स्गौ, भ्रौ न्गौ ग्" इति पि० सू० ५।३६

समन्वयः स० ज० स० गु० भ० र० न० गु० गु०

I I S-I S I I I S-I-S I I-S I S-I I I-S-S

असमे सजौ सगुरुयुक्तौ । केतुमती समे भरनगाद्गः ॥५॥

असम इति यदि असमे विषमे पादे सजौ सगण-जगणौ सगुरू सगण-गुरू ताभ्याम् अन्ते युक्तौ भवेताम् । समे पादे भरनगात् भगण रगण-नगण गुरुतः परः, ग एकः पुनर्गुरुः भवति तदा केतुमती नाम छन्दः स्यात् ॥

अन्वयः—

चेत् असमे सजौ सगुरुयुक्तौ, समे भरनगात् गः स्यात् तदा केतुमती भवति ।

भाषार्थः—

असम इति जिसके विषम पादों में सगण तथा जगण, सगण और गुरु से

अन्त में युक्त हों, एवं विषमपादों में भगण रगण नगणों से परे दो गुरु हों, तो वह केतुमती नामक छन्द होता है ॥५॥

"आख्यानकी तौ ज्गौ ग्, ज्तौ ज्गौ ग्" इति पि०सू०५।३७

समन्वयः त० त० ज० गु०गु० ज० त० ज० गु०गु०

S S I-S S I I S I—S-S—I S I-S S I-I S I-S-S

आख्यानकी तौ जगुरू ग ओजे । जतावनोजे जगुरू गुरुश्चेत् ॥

आख्यानकीति ओजे विषमे पादे तौ द्वौ तगणौ जगुरू जगण गुरू गः पुनः गुरुश्च भवति । पुनरनोजे समे पादे जतौ जगण तगणौ ततो जगुरूजगण-गुरू पुनरेको गुरुश्चेत्तदा आख्यानकी नाम छन्दो भवति

अन्वयः—

चेत् ओजे तौ जगुरू गः अनोजे जतौ जगुरू गुरुश्च तदा आख्यानकी भवति ॥६॥

भाषार्थः—

आख्यानकीति-यदि विषमपादों में दो तगण एक जगण और दो गुरु हों, तथा समपादों में जगण तगण जगण से परे दो गुरु हों, तव आख्यानकी नामक होता है ।

"विपरीताख्यानकी ज्तौ ज्गौ ग्, तौ ज्गौ ग्" इति पि०सू०५।३८

समन्वयः

ज० त० ज० गु०गु० त० त० ज० गु०गु०

I S I-S S I-I S I-S--S --S S I-S S I I S I S-S

जतौ जगौ गो विषमे समे स्यात् । तौ ज्गौ ग एषा विपरीतपूर्वा ॥७॥

जताविति यदि विषमे पादे तौ जगण-तगणौ जगौ जगण-गुरू गुरुश्च भूय एकः गुरुश्च । पुनः समे पादे तौ द्वौ तगणौ जगौ जगण गुरू गः गुरुश्च स्यात् तदा एषा विपरीतपूर्वा विपरीत इति शब्दः पूर्वो यस्याः सा आख्यानकी अर्थात् विपरीताख्यानकी भवति ॥

अन्वयः—

चेत् विषमे जतौ जगौ गः, समे तौ ज्गौ गः एषा विपरीतपूर्वा (आख्यानकी) भवति ॥७॥

भाषार्थः—

जेति—यदि विषमपादों में जगण तगण जगण और दो गुरु हों, तथा समों में दो तगण एक जगण दो गुरु हों, तो विपरीत शब्द है पूर्व जिसके ऐसी आख्यानकी अर्थात् विपरीताख्यानकी छन्द होता है। आशय यह है कि आख्यानकी के पादों को विपरीत कर दो अर्थात् प्रथम को द्वितीय तृतीय को चतुर्थ, एवं चतुर्थ को तृतीय द्वितीय को प्रथम बना दो, तो विपरीताख्यानकी छन्द बन जाता है। इसी लिए इसका विप रीताख्यानकी यह अन्वर्थ नाम लिख दिया है ॥८॥

"हरिणप्लुता सौ स्लौ ग्, न्भौ भ्रौ" इति पि० सू० ५।३९

समन्वयः

स० स० स० ल०गु० न० भ० भ० र०

।।ऽ-।।ऽ-।।ऽ-।-ऽ- ।।।ऽ।।-ऽ।।-ऽ।ऽ

सयुगात्सलघू विषमे गुरुः। युजि नभौ च भरौ हरिणप्लुता ८।

सेति विषमे पादे सयुगात् सगणयुग्मात् सलघू सगण-लघू गुरुश्च, पुनर्युजि समे पादे नभौ नगण-भगणौ भरौ भगण-रगणौ च तदा हरिणप्लुता नाम छन्दो भवति॥

अन्वयः—

विषमे सयुगात् सलघू गुरुः, युजि नभौ भरौ च तदा हरिप्लुता भवति ॥८॥

भाषार्थः—

सेति विषमपादों में दो सगणों से परे सगण लघु और गुरु हों, तथा समपादों नगण भगण भगण और रगण हों, तो हरिणप्लुता नामक छन्द जानना॥

"अपरवक्त्रं नौ लौं ग्, न्जौ ज्रौ" इति पि० सू० ५।४०

समन्वयः

न० न० र० ल०गु० न० ज० ज० र०

।।।-।।।ऽ।ऽ-।ऽ--।।।-।ऽ-।-।ऽ।ऽ।ऽ

अयुजि ननरला गुरुः समे। न्जमपरवक्त्रमिदं ततो जरौ ॥९॥

अयुजीति अयुजि विषमे पादे ननरलाः द्वौ नगणौ ततो रगण

लघू ततो गुरुश्च । समे पादे न्जं न् च ज् च तयोः समाहारः न्जं नगण जगणौ ततोऽनन्तरं जरौ जगण रगणौ इदमपरवक्त्रं नाम छन्दः ॥

अन्वयः—

चेत् अयुजि ननरला गुरुः; समे न्जं ततो जरौ इदम् अपरवक्त्रं भवति ॥९॥

भाषार्थः—

**अयुजी**ति जिसके विषमपादों में दो नगण एक रगण १ लघु और १ गुरु हों, तथा समों में नगण-जगण से परे जगण रगण हों उसका नाम अपरवक्त्र होता है ॥९॥

"पुष्पिताग्रा नौ यौ, न्जौ ज्रौ ग्" इति पिं० सू०५।३४?

समन्वयः

| न० | न० | र० | य० | न० | ज० | ज० | र० | गु० |
|---|---|---|---|---|---|---|---|---|
| ।।। | ।।। | ऽ।ऽ | ।ऽऽ | ।।। | ।ऽ। | ।ऽ। | ऽ।ऽ | ऽ |

अयुजि नयुगरेफतो यकारो । युजि च नजौ जरगाश्च पुष्पिताऽग्रा ।

अयुजीति अयुजि विषमे पादे नयुगं रेफश्च तौ ताभ्याम् अर्थात् नगण-नगण-रगणेभ्यः परो यकारो यगणो भवति । च पुनः युजि समे पादे नजौ नगण-जगणौ ततो जरगा जगण-रगण-गुरुवश्च तदा पुष्पिताग्रा नाम छन्दो भवेत् ।

अन्वयः—

चेत् अयुजि नयुगरेफतः यकारः, युजि च नजौ जरगाश्च पुष्पिताग्रा भवति ॥१०॥

भाषार्थः—

**अयुजी**ति—जिसके विषमपादों में दो नगण और एक रगण और यगण हों, तथा समों में एक नगण दो जगण एक रगण और एक गुरु हो उसका नाम पुष्पिताग्रा होता है ॥१०॥

वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चित ।
पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं परे ॥१०॥

यदिदं छन्दः अपरवक्त्राख्यं नाम वदन्ति । तत् केचित्

विपश्चितः पण्डिता वैतालीयं वदन्ति कथयन्ति। केचिदाचार्याःततः पश्चात्याः पुष्पिताग्राभिधं छन्दः परे विद्वांसः औपच्छन्दसिकं वदन्ति।

अन्वयः—

केचित् विपश्चितः अपरवक्त्राख्यं वैतालीयं वदन्ति, केचित् पुष्पिताग्राभिधं परे औपच्छन्दसिकं वदन्ति ॥११॥

भाषार्थः—

**वदन्ती**ति- कई एक विद्वान् जन अपरवक्त्र नामक छन्द को वैतालीय ही कहते हैं, क्योंकि अपरवक्त्र तथा वैतालीय का लक्षण परस्पर मिल जाता है,ऐसे ही कई एक आचार्य पुष्पिताग्रा छन्द को औपच्छन्दसिक नाम से ही व्यवहृत करते हैं। यतः इन दोनों के भी लक्षण परस्पर एक से ही हैं ॥ वह एकत्व इस प्रकार है।

वैतालीय का लक्षण है कि "विषम में छः मात्रा तथा सम में आठ मात्रा हों दोनों के अन्त में एक रगण एक लघु और एक गुरु हो, समपाद की मात्रायें केवल लघु रूप ही न हों किन्तु गुरुमिश्रित हों, तथा दूसरी,छठी,आठवीं मात्राएं पर से संयुक्त न हों" इति ॥ यह लक्षण अपरवक्त्र में भी घट सकता है ॥ जैसेः—

६मात्रा र० ल०गु० ८मात्रा र० ल०गु०

। । । । । । ऽ । ऽ—। ऽ—। । । । ऽ । । ऽ । ऽ । ऽ

अयुजि ननरला गुरुः समे न्जमपरवक्त्रमिदं ततो जरौ ॥

इसी प्रकार पुष्पिताग्रा में औपच्छन्दसिक का लक्षण घटता है ॥

इसी पुष्पिताग्रा में "विषम में छः और सम में आठ मात्रा से परे रगण यगण हों, सम की मात्रा केवल लघु स्वरूप न हों किन्तु गुरु मिश्रित हों, दूसरी छठी आठवीं कला पराश्रित न हो" यह औपच्छन्दहिक का लक्षण सम्पूर्णतया घट गया इसी लिए कई आचार्य पुष्पिताग्रा और औपच्छन्दसिक को एक ही मानते है भिन्न नहीं, वास्तव में यह युक्त भी है। परन्तु ऐसा अर्थ करने में मूलानुग्रह विचारणीय है ॥

"यवमती जौं जौं ज्रौ ज्रौ ग्" इति पि० सू० ५।४२

समन्वयः र० ज० र० ज० र० ज० ज० र० गु०

ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ—ऽ

स्यादयुग्मकेरजौ रजौ समेतु। जरौ जरौ गुरुर्यदा यवान्मतीयम्॥११

इति वृत्तरत्नाकराख्ये छन्दोग्रन्थेऽर्धसमवृत्तरूपश्चतुर्थोऽध्यायः ॥४॥

स्यादिति अयुग्मे विषमे पादे रजौ रगण-जगणौ ततोऽग्रे पुनः रजौ रगण-जगणौ। तु पुनः समे पादे जरौ जगण-रगणौ, ततोऽग्रे पुनः जरौ जगण रगणौ गुरुश्च। तदा इयं यवात् यवशब्दात्परा मती यव-मतीत्यर्थः तदाख्यं छन्दः स्यात्। विषमे सजसा गुरुः समे, सभरा लोऽथ गुरुर्वियोगिनी ॥ ओजपरौ भरौ जरौ गुरू समे जौं यौं, कीर्तिता बुधैरियं तु षट्पदाख्या ॥ रो जरौ जसंयुतौ पदे पदेऽथ, युग्मे तरौ जरौ गुरुर्भृगी यवानी ॥ अयुजि ननभभा समकेऽपि तु, नयुगरयुगलं तदा कौमुदी ॥ यदि विषमे भवतो नजौ जरौ, सजयाः समे जगुरू मञ्जुसौरभम् ॥ तथाष्टाविंशतिर्लघव एको गुरुरिति विषमः पादः, त्रिंशल्लघव एको गुरुश्चेति समः सा शिखान्ता ॥ [इयमेव विपर्यस्तार्द्धा खञ्जा नाम] *विषमे यदि सौ जगौ समे, स्तरला गोऽपरवक्त्रमीरितम् ॥ *विषमे सजसा गुरू अनोजे, सभरा यश्च तु मालभारणीयम् ॥ *विषमे सजसा गुरू अनोजे स्मरयाश्छन्दसिकं तदौपपूर्वम् ॥

इति वृत्तरत्नाकराख्यछन्दोग्रन्थस्य रत्नसंग्रहव्याख्यायामर्द्धसम-वृत्ताध्यायश्चतुर्थः समाप्तः ॥४॥

अन्वयः—

यदा अयुग्मके रजौ रजौ, समे तु जरौ जरौ गुरुः, तदा इयं यवात् मती (यवमती) स्यात् ॥१२॥

भाषार्थः—

स्यादिति जब विषम पाद में दो वार क्रम से रगण जगण आवें, तथा सम में क्रम से दो वार जगण रगण और अन्त में गुरु हो, तब यव इस शब्द से परे मती शब्द अर्थात् यवमती नाम से वाच्य छन्द होता है ॥१२॥

इति श्रीवृत्तरत्नाकर की रत्नसंग्रह व्याख्या पर भाषाप्रभाकर टीका में अर्द्धसमवृत्तों का चतुर्थ अध्याय समाप्त हुआ ॥ शुभम्

---

## अथ पञ्चमोऽध्यायः विषमवृत्तलक्षणखण्डः

### ( मूलम् )

—— ० ——

मुखपादोऽष्टभिर्वर्णैः । परेऽस्मान्मकरालयैः क्रमाद्-वृद्धा ॥ सततं यस्य विचित्रैः पादैः सम्पन्नसौन्दर्यं तदभिहितममलधीभिः पदचतुरूर्ध्वाभिधं वृत्तम् ॥ प्रथममुदितवृत्ते । विरचितविषमचरणभाजि ॥ गुरुक-युगलनिधन इह कलित आपीडः ॥ विधृतरुचिरपदविताति यतिरिति भवति पीडः ॥ प्रथममितरचरणसमुत्थं श्रयति जगति लक्ष्म ॥ इतरदितरजनितमपि यदि च तुर्यं । चरणयुगलकमधिकृतमपरमिति कलिका सा ॥ द्विगुरु युतसकलचरणान्ता मुखचरणरचितमनुभवति तृतीयः चरण इह हि लक्ष्म । प्रकृतमपरमपि यदि भजति लवली सा ॥ प्रथममधिवसति यदि तुर्यं । चरमचरणपदमव-सितगुरुयुग्मा । निखिलमपरमुपारितनसममिह ललित-पादा । त्रितयममृतधारा ॥

"[1]प्रतिपादचतुर्वृद्ध्या पदचतुरूर्ध्वम्" इति पि० सू० ५।२०

समन्वयः

१ २ ३ ४ ५ ६ ७ ८

मुखपादोऽष्टभिर्वर्णैः ॥

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२

परेस्मान्मकरालयैः क्रमाद्वृद्धाः ॥

---

(टि०) १ प्रतिपादं चतुर्णामक्षराणां वृद्ध्या आधिक्येनेत्यर्थः ॥

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
सततं यस्य विचित्रैः पादैः सम्प न्न सौ न्द र्यं ॥
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
त द भि हि तममलधीभिः प द च तु रू र्ध्वा भि धं वृ त्तम्

अथ विषमवृत्ताध्यायो व्याख्यायते मुखपाद इति यस्य वृत्तस्य मुखपाद आदिपादोऽष्टभिर्वर्णैः अस्मात् मुखपादात्परे पश्चाद्भवास्त्रयः पादा मकरालयैश्चतुर्भिरक्षरैः क्रमात् क्रमेण वृद्धाः (द्वितीयपादो द्वादशभिरक्षरैस्तृतीयः पादः षोडशाक्षरैश्चतुर्थो विंशत्यक्षरैः) भवन्ति तदा अमलधीभिः पण्डितैः सततमनवरतं यस्य वृत्तस्य विचित्रैः नानाविधैः पादैः सम्पन्नसौन्दर्यं जातचारुत्वम् तत् पदचतुरूर्ध्वाभिधं वृत्तम् अभिहितं भणितम् ॥ अत्र वर्णैरिति सम्पन्नसौन्दर्यमिति च वदता गुरुलघुनिवेशनियमो नास्ति किन्तु श्रोत्रसौभाग्यार्थं वर्णवैचित्र्यं विधेयमिति सूचितम् ।

अन्वयः—

यस्य मुखपादः अष्टभिः वर्णैः अस्मात् परे मकरालयैः क्रमात् वृद्धाः तदा अमलधीभिः सततं विचित्रैः पादैः सम्पन्नसौन्दर्यं तत् पदचतुरूर्ध्वाभिधं वृत्तम् अभिहितम् ॥१॥

भाषार्थः—

**मुखे**ति--जिस वृत्त का प्रथम पाद आठ वर्णों से बना हो, तथा इससे पीछे के पाद क्रम से चार २ वर्णों करके बढ़े हुए हों, अर्थात् द्वितीय में बारह, तृतीय में सोलह, चतुर्थ में बीस इस प्रकार प्रतिपाद चार २ वर्ण बढते जावें, तो निर्मलबुद्धिवाले पण्डित पुरुषों ने सदैव विचित्र पादों से सौन्दर्यशाली उस वृत्त का नाम पदचतुरूर्ध्व कहा है ।१।

**"गावन्त आपीडः" ५।२१। "आदौ चेत्प्रत्यापीडः ५।२२ "प्रत्यापीडो गावादौ च" ५।२३ इति पि० सू०**

---

(टि०) १ पूर्वोक्तस्यैवान्ते चेत् गौ प्रतिपादं गुरुद्वयं तदा SS पीडनामेति । **आदावि**ति आदौ चेत् गुरुद्वयं तदा प्रत्यापीडो नाम । **प्रत्ये**ति यदि गौ आदौ चात् अन्तेऽपि भवतस्तदाऽपि प्रत्यापीड एवेति सूत्रत्रयार्थः ।

समन्वयः गु०२

१ २ ३ ४ ५ ६ ७ ८
प्रथम मुदित वृत्ते।

गु०२
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
विरचित विषम चर ण भा जि॥

गु०२
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
गुरुक युगल निधन इ ह क लि त आ ङ्ग।

गु०२
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
विधृतरुचिरपदवित ति य ति रि ति भ व ति पी डः।२॥

प्रथममिति। इह शास्त्रे विरचितान् विषमान् प्रतिपादं वृद्ध्या विषमाक्षरान् चरणान् पादान् भजतीत्येवंशीलं तत् तथा तस्मिन् प्रथम मुदितवृत्ते पूर्वं प्रतिपादिते पदचतुरूर्ध्वाभिधे वृत्ते गुरुयुगलं निधनेऽवसाने यस्य तत् तस्मिन्सति विधृता रुचिरा शोभना पदवितती पदसमूहे यतिर्येन स तथा आङ्ग कलितो युक्तः पीड आपीड इत्यर्थः तदाख्यं छन्दो भवतीति यावत्। भावार्थस्त्वयम् आपीडछन्दसि सर्वं लक्षणं पदचतुरूर्ध्वाभिधसमं किन्तु पादे पादे प्रान्ते गुरुद्वयं कार्यमिति॥ पैङ्गले तु विशेष उक्तः॥

अन्वयः—

इह विरचितविषमचरणभाजि प्रथममुदितवृत्ते गुरुकयुगलनिधने, विधृतरुचिरपदविततियतिः आङ्ग कलितः पीड इति भवति॥२॥

भाषार्थः—

**प्रथममिति**-इस छन्द शास्त्र में रचन किये हुवे (क्रमशः ८-१२-१६-२० अक्षरात्मक) विषम (विषमाक्षर) पादों से युक्त, पहले कहे हुए पदचतुरूर्द्ध्ववृत्त के ही पादों के अन्त में दो२ वर्णों को गुरु करने पर सुन्दर २ पदों के समूह तथा शोभन यति को धारण करने वाले इस छन्द का नाम 'आङ्' से युक्त 'पीड' अर्थात् आपीड होता है,

पिङ्गलाचार्य ने 'आदि में दो गुरु होने पर, अथवा आदि अन्त दोनों जगह दो २ गुरु होने से भी प्रत्यापीड, नामक एवं दो छन्द और भी विशेष वर्णन किये हैं

"[२]प्रथमस्य विपर्यासे मञ्जरीलवल्यमृतधाराः" इति पि०सू०५।२४

समन्वयः

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
प्रथम मितर चरण स मु त्थं।
१ २ ३ ४ ५ ६ ७ ८
श्रयति जगति लक्ष्म ॥
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
इतर दितर जनित म पि य दि च तु य।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
चरणयुगलकमधिकृत म प र मि ति क लि का सा ॥३॥

प्रथममिति तुर्यं श्लोकचतुर्थोऽशः पाद इत्यर्थः। यदि प्रथमं तुर्यं प्रथमपादः इतरचरणसमुत्थं द्वितीयचरणभवं द्वादशाक्षररूपं लक्ष्म लक्षणं श्रयति। इतरत् तुर्यं द्वितीयपाद इतरजनितमपि प्रथमपाद-जनितमष्टाक्षररूपं श्रयति ॥ अपरं चरणयुगलं तृतीयचतुर्थरूपमधि-कृतम् अधिकारप्राप्तं पूर्वोक्तं क्रमेण षोडशविंशत्यक्षरत्वं लक्ष्म लक्षणं श्रयति। तदा सा इत्यनेन प्रकारेण जगति लोके कलिका नाम छन्दो भवति। प्रथमः पादो द्वादशाक्षरः (१२) द्वितीयः अष्टाक्षरः (८) तृतीयः षोडशाक्षरः (१६) चतुर्थो विंशत्यक्षरः (२०) इति तत्त्वम् ॥३॥ पैङ्गलेऽस्या मञ्जरीति नाम ५। २४ ॥

अन्वयः —

यदि प्रथमं तुर्यम् इतरचरणसमुत्थं लक्ष्म श्रयति, इतरत् इतर-जनितम् अपि श्रयति, अपरं चरणयुगलम् अधिकृतं लक्ष्म श्रयति तदा सा जगति कलिका इति भवति ॥ ॥

---

२ प्रथमस्य पादस्य द्वितीयेन विपर्यये मञ्जरी। तृतीयेन लवली। चतुर्थेन अमृतधारेति निष्कृष्टोऽर्थः ॥

**भाषार्थः—**

**प्रथमम**िति--यदि प्रथमतुर्य(पाद इसमें 'तुर्य' श्लोक के चतुर्थांश को जिसे पाद कहते हैं, लिखा है। तुर्य का अर्थ चतुर्थ नहीं) द्वितीयपाद के लक्षण को आश्रित करे, तथा द्वितीयपाद प्रथमपाद के लक्षण को आश्रित करे, अर्थात् प्रथम (अष्टाक्षर) पाद, द्वितीय ( द्वादशाक्षर ) पाद की जगह हो, तथा द्वितीय ( द्वादशाक्षर ) पाद प्रथम ( अष्टाक्षर ) पाद की जगह हो, और बाकी ३–४) दोनों पाद अधिकृत अर्थात् पूर्वोक्त षोडशाक्षर-विंशत्यक्षर रूपलक्षण को पूर्ववत् आश्रित करें, तब इस छन्द का नाम संसार में कलिका होता है ॥३॥.

**समन्वयः**

गु०२
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
**द्विगुरु युत सकल च र णा न्ता ।**

गु०२
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
**मुख चरण रचित म नु भ व ति तृ ती यः ॥**

गु०२
१ २ ३ ४ ५ ६ ७ ८
**चरण इह हि लक्ष्म ।**

गु०२
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
**प्रकृतम परम खि ल म पि य दि भ ज ति ल वली सा ॥४॥**

**द्वीति यदि द्वाभ्यां गुरुभ्यां युतः युक्तः सकलचरणानामन्तोऽवसानं २ यस्याः सा तथा लवली नाम छन्दो भवति। इहाऽस्यां लवल्यां हि निश्चितं तृतीयः चरणो मुखचरणरचितं प्रथमपादोद्भवम् अष्टाक्षरतारूपं लक्ष्म लक्षणम् अनुभवति आश्रयति, अपरमन्यदखिलमपि चरणं प्रकृतं प्रस्तुतं आपीडोक्तलक्षणं भजति। द्वितीयपादादिसमानं क्रमशो भवतीत्यर्थः। प्रथमो द्वादशाक्षरः (१२) द्वितीयः षोडशाक्षरः (१६ तृतीयः अष्टाक्षरः (८) चतुर्थो विंशत्यक्षरः (२०) इति तत्त्वम् ॥**

अन्वयः—

द्विगुरुयुतसकलचरणान्ता सा लवली भवति यदि इह हि तृतीयः चरणो मुखचरणरचितं लक्ष्म अनुभवति, अपरं च अखिलं प्रकृतम् ॥४॥

भाषार्थः—

द्वीति--यदि समस्त पादों के अन्त दो गुरु अक्षरों से युक्त हों तब उस छन्द का नाम लवली होता है। इस लवली में तृतीय पाद प्रथम पाद के लक्षण को अनुभव करे, अर्थात् तृतीय (द्वादशाक्षर) पाद, प्रथम ( अष्टाक्षर ) पाद के स्थान में स्थित हो, (प्रथम पाद तृतीय की जगह हो) तथा बाकी सब चरण पूर्वोक्त लक्षण को आश्रयण करें, अर्थात् प्रथम १२ अक्षर का द्वितीय १६ का तृतीय ८ का चतुर्थ २० का हो, ॥ ४ ॥

समन्वयः

गु०२
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२
प्र थ म म धि व स ति य दि तु य।

गु०२
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
च र म च र ण प द म व सि त गु रु यु ग्मा ॥

गु०२
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २०
नि खि ल म प र मु प रि त न स म मि ह ल लि त पा दा।

गु०२
१ २ ३ ४ ५ ६ ७ ८
त्रि त य म मृ त धा रा ॥५॥

प्रथममिति यदि प्रथमं तुर्यं प्रथमपादोऽष्टाक्षररूपः ( कर्ता ) चरमचरणपदं चतुर्थपादस्य पदं स्थानमधिवसति प्राप्नोति चतुर्थो भवतीत्यर्थः अर्थात् चतुर्थः पादः अष्टाक्षरो भवति । निखिलं समस्तम् अपरमन्यत् त्रितयं पादत्रयम् उपरितनसमम् आपीडद्वितीय-पादादिसमानं तदा ललितपादा कोमलपदघटितचरणेत्यर्थः अवसिते

सर्वपादानाम् अवसाने २ गुरुयुग्मं यस्याः सा अवसितगुरुयुग्मा इह शास्त्रे अमृतधारा नाम छन्दो भवति। प्रथमो द्वादशाक्षरः (१२) द्वितीयः षोडशाक्षरः (१६) तृतीयो विंशत्यक्षरः (२० चतुर्थोऽष्टाक्षरः इति तत्त्वम् ॥५॥ इति पदचतुरूर्ध्वप्रकरणं समाप्तम्।

अन्वयः—

यदि प्रथमं तुर्यं चरमचरणपदम् अधिवसति, निखिलम् अपरं त्रितयं उपरितनसमम्, तदा अवसितगुरुयुग्मा ललितपादा सा अमृतधारा भवति ॥ ५ ॥

भाषार्थः—

**प्रथममिति**--यदि प्रथमपाद (कर्ता) चतुर्थपाद के स्थान में स्थित हो, अर्थात चतुर्थ पाद अष्टाक्षररूप हो, तथा बाकी सब तीनों पाद पहले के समान हों, अर्थात् प्रथम १२ अक्षर का, द्वितीय १६ का, तृतीय २० का हो, और प्रत्येक पाद के अन्त के दो वर्ण गुरु हों, तब ललित (सुन्दर) पादों से युक्त उस छन्द का नाम अमृतधारा होता है ॥५॥

इति पदचतुरूर्ध्वप्रकरणम् ॥

( मूलम् )

---

सजमादिमे सलघुकौ च। नसजगुरुकेष्वथोद्गता ॥ त्र्यङ्घ्रिगतभनजला गयुताः। सजसा जगौ चरम एकतः पठेत् ॥ चरणत्रयं भजति लक्ष्म। यदि सकलमुद्गतागतम् ॥ नौ भगौ भवति सौरभकं। चरणे यदीह भवतस्तृतीयके ॥ नयुगं सकारयुगलं च। भजति चरणं तृतीयकम् ॥ तदुदितसुरूमातिभिर्ललितं। यदि शेषमस्य खलु पूर्वतुल्यकम् ॥

---

"उद्गतामेकतः स्जौ स्लौ, न्सौ ज्गौ, भ्नौ ज्लौ ग्, स्जौ स्जौ ग्" इति पि० सू० ५ । २५

समन्वयः

स० ज० स० ल० न० स० ज० गु०

। । ऽ । ऽ । । । ऽ । । । । ऽ । ऽ । ऽ

सजमादिमे सलघुकौ च । नसजगुरुकेष्वथोद्गता ॥

भ० न० ज० ल० गु० स० ज० स० ज० गु०

ऽ । । । । । । ऽ । । ऽ । । ऽ । ऽ । । । ऽ । ऽ । ऽ

त्र्यङ्घ्रिगतभनजला गयुताः । सजसा जगौ चरणमेकतः पठेत् ॥१

सजमिति यदि आदिमे प्रथमे पादे सजं ( सश्च जश्च तयोः समाहारः ) सगण-जगणौ पुनः सलघुकौ सगण-लघू च भवतः । अथ द्वितीये पादे नसजगुरुकेषु नगण-सगण-जगण-गुरुषु सत्सु । त्रिशब्द-स्तृतीयेत्यर्थे वर्तते, एवं च त्र्यङ्घ्रौ तृतीये पादे इत्यर्थस्तत्र गता ये भनजला भगण-नगण-जगण-लघवस्ते गयुता गेन गुरुणा युक्ताः स्युः ॥ चरमे पादे सजसा सगण-जगण-सगणा जगौ जगण-गुरू च एवं यदि चरणम् एकतः पठेत् अर्थात्प्रथमं पादं द्वितीयेनैकीकृत्यो-च्चारयेदित्यर्थः तत्रात्यन्तयतिं न कुर्यादिति यावत् (ल्यब्लोपे पञ्चमी) तदा उद्गता नाम छन्दो भवति ॥१॥

अन्वयः—

यदि आदिमे सजं, सलघुकौ च, अथ नसजगुरुकेषु च (सत्सु), त्र्यङ्घ्रिगतभनजलाः (चेत्) गयुताः, चरमे सजसा जगौ, ( चेत् प्रथमं) चरणम् (द्वितीयेन) एकतः पठेत् तदा उद्गता भवति ॥१॥

भाषार्थः—

**सजमिति**—यदि प्रथम पाद में सगण जगण सगण और १ लघु हों, द्वितीय पाद में नगण सगण जगण तथा एक गुरु हो, तृतीय पाद में भगण नगण जगण लघु, और एक गुरु से युक्त हों, तथा चतुर्थ में सगण जगण सगण तथा जगण-गुरु हों,

और यदि प्रथम पाद को द्वितीय से मिला कर पढा जाय, अर्थात् मध्य में विशेष यति न की जाय तो उद्गता नामक छन्द होता है ॥१॥

"तृतीयस्य सौरभकं, नौं भगौ" इति पि० सू० ५ । २६

समन्वयः

स० ज० स० ल० न० स० ज० गु०

I I S-I S I-I I I S I -I I I-I I S-I S I-S

चरणत्रयं भजति लक्ष्म । यदि सकलमुद्गतागतम् ॥

र० न० भ०गु० स० ज० स० ज०गु०

S I S I I I -S I I-S—I I S I S I—I I S-I S I-S

नौं भगौ भवति सौरभकं । चरणे यदीह भवतस्तृतीयके ॥२॥

चरणत्रयमिति । यदि इह छन्दसि तृतीयके तृतीये (स्वार्थे कः) चरणे नौं रगण-नगणौ भगौ भगण-गुरू च भवतः । अपरं तृतीयवर्जं सकलं दलं चरणत्रयं यदि उद्गतागतं लक्ष्म लक्षणं भजति तदा सौरभकं नाम छन्दो भवति ॥

अन्वयः—

यदि इह तृतीयके चरणे नौं भगौ भवतः, यदि च चरणत्रयम् (अवशिष्टम्) उद्गतागतं सकलं लक्ष्म भजति, तर्हि सौरभकं भवति ॥२॥

भाषार्थः--

चरणेति—जिस के तृतीय पाद में रगण नगण भगण और गुरु हों, और शेष तीनों पाद उद्गता के लक्षण को आश्रित करें वह सौरभक नाम छन्द होता है॥२॥

"ललितं नौ सौ" इति पि० सू० ५ । २७

समन्वयः स० ज० स० ल० न० स० ज० गु०

I I S-I S I-I I S-I —I I I I I S—I S I-I

नयुगं सकारयुगलं च । भजति चरणं तृतीयकम् ॥

---

(टि०) १ सप्तम्यर्थे षष्ठी तृतीये पादे यदि रगण-नगणौ भगण-गुरू च भवतस्तदा सौरभकं तृतीयस्येत्युक्त्या शेषमुद्गतावदिति सूचितम् ॥

न० न० स० स० स० ज० स० ज० गु०

।।।-। ।-।।ऽ-।।ऽ—।।ऽ-।ऽ।-।।ऽ-।ऽ।-ऽ

तदुदितमुरुमतिभिर्ललितं । यदि शेषमस्य खलु पूर्वतुल्यकम् ॥३॥

नयुगमिति यदि तृतीयकं चरणं तृतीयः ( स्वार्थे कः ) पादः नयुगं नगणद्वयं सकारयुगलं सगणद्वयं च भजति शेषम् परञ्च पादत्रयं खलु निश्चितं पूर्वतुल्यकम् उद्गतागतं लक्षणं भजति आश्रयति । तदा उरुमतिभिः प्रचुरबुद्धिभिः पण्डितैस्तद्वृत्तं ललितं नाम उदितमुक्तम् ॥

अन्वयः —

यदि तृतीयकं चरणं नयुगं सकारयुगलञ्च भजति, अस्य शेषं खलु पूर्वतुल्यकम्, तत् उरुमतिभिर्ललितम् उदितम् ॥ ३ ॥

भाषार्थः—

नेति–यदि तृतीय पाद में दो नगण तथा दो सगण हों, और बाकी सब पाद उद्गता के लक्षण से युक्त हों, तब बड़ी बुद्धि वाले विद्वानों ने इसका नाम ललित कहा है

इति उद्गताप्रकरणं समाप्तम् ॥

( मूलम् )

---

म्सौ ज्भौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्यत् । त्रितयं सनजरगास्तथा ननौ सः ॥ त्रिनपरिकलितजयौ । प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥ नौ पादेथ तृतीयके सनौ नसयुक्तौ । प्रथमाङ्घ्रिकृतयतिस्तु वर्धमानम् ॥ त्रितयमपरमपि पूर्वसदृशमिह भवति । प्रततमतिभिरिति गदितं खलु वृत्तम् ॥ अस्मिन्नेव तृतीयपादके तजराः स्युः । प्रथमे च विरतिरार्षभं वदन्ति ॥ तच्छुद्धविराट्पुरःस्थितं त्रितयमपरमपि यदि पूर्वसमं स्यात् ॥

---

"उपस्थितप्रचुपितं पृथगाद्यं म्सौ ज्भौ गौ, स्नौ ज्रौ ग्, नौ स्, नौ न्ज्यौ" इति पि० सू० ५ । २८

समन्वयः म० स० ज० भ० गु०२

S S S--।।S ।S।-S ।।-S S

म्सौ ज्भौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्यत् ॥

स० न० ज० र० गु०

।।S--।।।-।S ।-S ।S—S

त्रितयं सनजरगास्तथा ननौ सः

न० न० स०

।।।-।।।-।।S

त्रिनपरिकलितजयौ ॥

न० न० न ज० य०

।।।-।।।-।।।-।S ।-।S S

प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥१॥

म्साविति म्सौ मगण-सगणौ ज्भौ जगण-भगणौ गौ द्वौ गुरू चेत्येषः प्रथमोऽङ्घ्रिश्चरणः एकतः एकः ( प्रमथार्थे तसिल् ) पृथक् द्वितीयादिपादत्रयात् पृथक्कृत्य पठनीयः, इतोऽन्यत् अग्रेभवं पादत्रितयं तु एकीकृत्यैव पृथक् पठनीयं तत्र विरामो न कार्य इत्यर्थः । ततः "श्लोकार्द्धे तु विशेषतः" इत्यस्यापवादोऽयमिति भावः । अधुना चरणत्रयलक्षणमुच्यते सेति सनजरगाः सगण-नगण जगण-रगण-गुरवो द्वितीये पादे, तथा ननौ द्वौ नगणौ सः सगणश्च तृतीये पादे। त्रयश्च ते नास्त्रिनाः तैः त्रिनैः परिकलितौ युक्तौ च तौ जयौ जगण-यगणौ चतुर्थे पादे यदि भवतस्तदोपस्थित इति (शब्दः)पूर्वं यस्य तत् प्रचुपितम् उपस्थित प्रचुपितं नाम इदं छन्दः उदितं कथितं छन्दोभिरिति शेषः ॥

---

(टि०)१ आद्यं चरणं पादत्रयात् पृथक् पठनीयमित्याद्यन्वयः ॥

अन्वयः—

यत्र म्सौ ज्भौ गौ स प्रथमाङ्घ्रिः एकतः (पठनीयः) अन्यत् त्रितयं पृथक् (पठनीयम्)। तत्र सनजरगाः ननौ सः, तथा त्रिनपरिकलित-जयौ च, इदम् उपमुपस्थितपूर्वं प्रचुपितम् उदितम् ॥१॥

भाषार्थः—

म्सावितिं--जिसका मगण सगण जगण भगण और दो गुरुओं से युक्त प्रथमपाद पृथक् पढ़ा जाय, बाकी के तीन पाद इकट्ठे ही पढे जायं अर्थात् उनमें यति न की जाय। तथा द्वितीय पाद में सगण नगण जगण रगण गुरु हों, तृतीय में दो नगण एक सगण, और चतुर्थ चरण में तीन नगणों से युक्त जगण यगण हों, उस छन्द का नाम उपस्थित (शब्द) पूर्वक प्रचुपित अर्थात् उपस्थितप्रचुपित होता है (कहा है) ॥१॥

## "वर्धमानं नौ स्नौ न्सौ" इति पि० सू० ५ । २९

समन्वयः

म० स० ज० भ० गु०२ स० न० ज० र० गु०

ऽ ऽ ऽ-। । ऽ-। ऽ ।-ऽ । ।-ऽ ऽ--। । ऽ-। । ।-। ऽ । ऽ । ऽ ऽ

नौ पादेथ तृतीयके सनौ नसयुक्तौ। प्रथमाङ्घ्रिकृतयतिस्तुवर्धमानम्

न० न० स० न० न० स० न० न० न० ज० य०

। । ।-। । ।-। । ऽ-। । ।-। । ।-। । ऽ--। । ।-। । ।-। । ।-। ऽ ।-। ऽ ऽ

त्रितयमपरमपि पूर्वसदृशमिह भवति। प्रततमतिभिरिति गदितं खलु वृत्तम्

नौ इति अथान्तरं तृतीयके पादे यदि नौ द्वौ नगणौ पुनः सनौ सगण नगणौ नसयुक्तौ नगण-सगणयुतौ स्तः। अपरमन्यत् पादत्रितयम् इह शास्त्रे पूर्वसदृशम् उपस्थितप्रचुपितसमानम् अपि निश्चितं भवेत्, यदि प्रथमाङ्घ्रौ कृता यतिर्यस्मिन् तत्प्रथमाङ्घ्रिकृतयति तत् प्रततमतिभिः विशालबुद्धिभिः नरैः खलु निश्चितम् इत्येवंभूतं वर्धमानं नाम छन्दो गदितं कथितम् ॥ २ ॥

अन्वयः—

अथ यदि तृतीयके पादे नौ सनौ नसयुक्तौ भवतः; इह अपरम् अपि

त्रितयम् पूर्वसदृशं भवति, तु प्रथमाङ्कितयति तत् खलु प्रततमतिभिः वर्धमानम् इति वृत्तं गदितम् ॥२॥

भाषार्थः—

नावििति--जिसके तृतीय पाद में दो नगण तथा सगण नगण, नगण सगण से युक्त हों तथा बाकी सब तीनों पाद पूर्वोक्त ( उपस्थितप्रचुपित) के सदृश हों, और प्रथम पाद में यति की हो, वह विशाल बुद्धि वाले पण्डितपुरुषों ने वर्धमान नामक वृत्त कहा है॥

'शुद्धविराडार्षभं तृ ज्राः'' इति पि० सू० ५ । ३०

समन्वयः

म० स० ज० भ० गु०२ स० न० ज० र० गु०

S S S·I I S-I S I S I I-S S—-I I S-I I I-I S I-S I S–S

अस्मिन्नेव तृतीयपादके तजराः स्युः । प्रथमे च विरतिरार्षभं वदन्ति।

त० ज० र० न० न० न० ज० य०

S S I-I S I-S I S-I I I-I I I-I I I-I S I-I S S

तच्छुद्धविराट्पुरःस्थितं त्रितयमपरमपि यदि पूर्वसमं स्यात् ॥३॥

अस्मिन्निति-अस्मिन्नेव वर्द्धमानसंज्ञके छन्दसि तृतीयपादके तजराः तगण-जगण-रगणाः स्युः । प्रथमे च पादे विरतिर्यतिः स्यात् अपरम् अपि पादत्रितयं पूर्वसमम् उपस्थितप्रचुपितसदृशं स्यात् तदा बुधास्तत् शुद्धविराट्पुरःस्थितं शुद्धविराडिति पदं पुरः पूर्वं स्थितं यस्य तत् आर्षभं छन्दो वदन्ति शुद्धविराडार्षभमित्यर्थः ॥ ३ ॥

अन्वयः--

अस्मिन्नेव तृतीयके यदि तजराः स्युः प्रथमे च विरतिः, अपरं त्रितयम् अपि पूर्वसमं स्यात्, तदा तत् शुद्धविराट्पुरःस्थितम् आर्षभं वदन्ति ॥

भाषार्थः--

अस्मिन्निति--इसी वर्धमान छन्द के तृतीय पाद में यदि तगण जगण रगण रख दिये जायं और प्रथमपाद में यति हो, तथा बाकी के सब तीनों पाद उपस्थितप्रचुपित के समान २ हों, तब शुद्धविराट् इस शब्द पूर्वक आर्षभ अर्थात् शुद्धविराडार्षभ छन्द होता है।।

"अत्राऽनुक्तं गाथा" इति पि० सू० ८।१

विषमाक्षरपादं वा पादैरसमं दशधर्मवत् ॥
यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥४

इति वृत्तरत्नाकराख्यच्छन्दोग्रन्थे पञ्चमोऽध्यायः।

विषमाक्षरेति-विषमाक्षराः पादा यस्मिन् तद्विषमाक्षरपादं छन्दः (वैषम्यं चाक्षरेषु गुरुलघुक्रम- संख्याभावात्) यथेदमेव अष्ट-दश-सप्त-नवाक्षरपादं वृत्तं, तथा पादैरसमं त्रिपादं षट्पादं चेत्यादि दशधर्मवत् भारतोक्त "दशधर्म" शब्दोपलक्षितगाथावत्।

तद्यथा :-

दशधर्मं न जानन्ति धृतराष्ट्र ! निबोध तान् ॥
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः।
त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश ॥ इति

इयं खलु षट्पदी गाथा। इत्येवमादि यच्छन्दोऽत्र विशेषेण नोक्तं तत्पूर्वसूरिभिः गाथेति नाम्ना प्रोक्तम्। इदं चावृत्या स्वातन्त्र्येणाऽपि योज्यम्। तेन समाक्षरपादानां समपादानां च कुड्मलदन्त्यादीनामपि गाथात्वं सिद्ध्यति। तेन गीतिका-कलिका-वेल्लितका-द्विपदी-ध्रुवकोत्साह-चत्वरी-पद्धुलिका प्रभृति तत्सर्वं गाथासंज्ञकम् इति कश्चित्।

अन्वयः—

विषमाक्षरपादं, दशधर्मवत् पादैरसमं वा अत्र यत् छन्दः न उक्तं तत् सूरिभिः गाथा इति प्रोक्तम् ॥४॥

भावार्थः-

विषमेति-जिसमें विषमाक्षरों वाले पाद हों अर्थात् गुरु लघु क्रम और संख्या का जिनमें आदर न हो, जैसे यही (विषम.....) पद्य। तथा जिसमें विषम तीन पांच छः इत्यादि पाद हों, जैसे महाभारत में 'दशधर्म' इत्यादिक श्लोक है, और जो छन्द इस वृत्तरत्नाकर में नहीं कहा गया वह सब आचार्यों ने गाथा के नाम से कहा है।

अब दशधर्मम् इत्यादि गाथा का अर्थ कहते हैं।

**दशे**ति हे धृतराष्ट्र! दश पुरुष धर्म को नहीं समझते उनको जानो। वह यह हैं १ मस्त २ गफलती स्वभाव वाला ३ थका हुआ ४ पागल ५ क्रोधी ६ भूख से वेसुरत ७ काहला (विना विचारे काम करने वाला) ८ डरपोक ९ लोभी १० कामी यह वे दश हैं। पिङ्गलमुनिना काश्चिद्गाथा नामलक्षणाभ्यामेव पठिताः सामान्यसूत्रश्चादावुक्तं तथाहि --

"अत्राऽनुक्तं गाथा" सू० ८। १

(वृत्तिः) अत्र शास्त्रे नामोद्देशेन यन्नोक्तं प्रयोगे च दृश्यते तद्गाथेति मन्तव्यम्॥

तत्र त्रिष्टुभि "कुड्मलदन्ती भ्तौ न्गौ गिन्द्रियरसाः" सू० ८। २॥

(वृत्तिः) यस्य पादे भगण तगणौ नगणौ गकारौ च भवतस्तद् वृत्तं कुड्मलदन्ती नाम गाथा। पञ्चभिः षड्भिश्च यतिः।

जगत्यां वरतनुर्न्जौ ज्रौ षड्रसाः सू० ८। ३॥

(वृत्तिः) यस्य पादे नगण-जगणौ जगण-रगणौ च, तद् वृत्तं वरतनुर्नाम गाथा। षड्भिः षड्भिश्च यतिः॥

जलधरमाला म्भौ स्मौ समुद्रवसव सू० ८ ४॥

वृत्तिः यस्य पादे मगण-भगणौ सगण-मगणौ च भवतः तद् वृत्तं जलधरमाला नाम गाथा चतुर्भिः अष्टाभिश्च यतिः॥

गौरी नौ रौ सू० ८ ५॥

(वृत्तिः) यस्य पादे नगणौ रगणौ च भवतस्तद् वृत्तं गौरी नाम गाथा। पादान्ते यतिः॥

ललना भ्तौ न्साविन्द्रियर्षय सू० ८। ६॥

(वृत्तिः) यस्य पादे भगण-तगणौ नगण-सगणौ च भवतस्तद् वृत्तं ललनानाम्नी गाथा। पञ्चभिः सप्तभिश्च यतिः।

अथाऽतिजगत्याम् कनकप्रभा स्जौ स्जौ ग्॥ सू० ८। ७

(वृत्तिः) यस्य पादे सगण-जगणौ पुनश्च सगण-जगणौ गकारश्च तद्वृत्तं कनकप्रभा नाम गाथा। पादान्ते यतिः॥

## कुटिलगतिर्नौ तौ ग् स्वरर्तवः ॥ सू० ८।८

(वृत्तिः) यस्य पादे द्वौ नगणौ द्वौ तगणौ गकारश्च भवति तद् वृत्तं कुटिलगतिर्नाम गाथा सप्तभिः षड्भिश्च यतिः॥

## (शक्वर्याम्) वरसुन्दरी भ्जौ स्नौ गौ सू० ८।९

(वृत्तिः) यस्य पादे भगण-जगण-सगण-नगणाः गकारौ च भवतः तद् वृत्तं वरसुन्दरी नाम गाथा। पादान्ते यतिः॥

## कुटिला म्भौ न्यौ गौ वेदरससमुद्राः ॥ सू० ८।१०

(वृत्तिः) यस्य पादे मगण-भगण-नगण-यगणाः गकारौ च भवतः तद् वृत्तं कुटिला नाम गाथा। पञ्चभिः षड्भिः चतुर्भिश्च यतिः॥

## (अष्टौ) शैलशिखा भ्रौ न्भौ भ्गौ भूतरसेन्द्रियाः ॥सू० ८।११

(वृत्तिः) यस्य पादे भगण-रगणौ नगण-भगणौ भगणः गकारश्च तद् वृत्तं शैलशिखा नाम गाथा। पञ्चभिः षड्भिः पञ्चभिश्च यतिः। क्वचित्पादान्ते यतिं पठन्ति॥

## वरयुवती भ्रौ य्नौ न्गौ ॥ सू० ८।१२

(वृत्तिः) यस्य पादे भगण-रगणौ यगण-नगणौ नगणः गकारश्च भवति तद्वृत्तं वरयुवती नाम गाथा। पादान्ते यतिः॥

## अत्यष्टौ) अतिशायिनी ज्भौ ज्गौ ग् दिक्स्वराः ॥ सू० ८।१३॥

(वृत्तिः) यस्य पादे जगण-भगणौ जगणः गकारौ च भवतः त[illegible] वृत्तम् अतिशायिनी नाम गाथा। दशभिः सप्तभिश्च यतिः॥

## अवितथं न्जौ भ्जौ ज्लौ ग् ॥ सू० ८।१४

(वृत्तिः) यस्य पादे नगण-जगणौ भगण-जगणौ जगण-लघू ग् गुरुश्च भवति। तद्वृत्तम् अवितथं नाम गाथा भवति। यतिः पादान्ते॥

## वस्विन्द्रियसमुद्राश्चेत्कोकिलकम्। सू० ८। १५॥

(वृत्तिः) यस्य पादे पूर्वोक्तगणा भवन्ति अष्टाभिः पञ्चभिः चतुर्भिश्च यतिर्भवति। तद् वृत्तं कोकिलकम् इति नाम्ना गाथा॥

## (धृतौ) विबुधप्रिया सौं जौ भ्रौ वसुदिशः॥ सू० ८।१६

(वृत्तिः) यस्य पादे रगण-सगणौ जगणौ भगण-रगणौ च भवतः तद् वृत्तं विबुधप्रिया नाम गाथा भवति। अष्टभिः दशभिश्च यतिः॥

## नाराचकं नौ रौ रौ॥ सू० ८। १७

(वृत्तिः) यस्य पादे नगणौ रगणाश्च चत्वारो भवन्ति तद् वृत्तं नाराचकं नाम गाथा भवति। दशभिः अष्टभिश्च यतिः॥

## विस्मिता य्मौ न्सौ रौ ग्रसर्तुस्वराः॥ सू० ८। १८

(वृत्तिः) यस्य पादे यगण-मगणौ नगण-सगणौ रौ द्वौ रगणौ गकारश्च भवति तद् वृत्तं विस्मिता नाम गाथा। षड्भिः षड्भिः सप्तभिश्च यतिः॥

## शशिवदना न्जौ भ्जौ ज्जौ रुद्रदिशः सू० ८। १९

(वृत्तिः) यस्य पादे नगण-जगणौ भगणः जगणाः त्रयः रगणश्च भवति तद् वृत्तं शशिवदना नाम गाथा। एकादशभिः दशभिश्च यतिः। पञ्चकावलीति केचित्॥ एवमादीनि कोटिशः प्रस्तारेषु महाकविप्रयोगेषु च दृश्यन्ते विशेषसंज्ञाभावात्तानि शास्त्रकारेण नाम निर्देशं कृत्वा नोक्तानि तानि च गाथाशब्देन कथ्यन्ते॥

इति वृत्तरत्नाकरस्य रत्नसंग्रहव्याख्यायां पञ्चमोऽध्यायः समाप्तः।

गाथाप्रकरण के अर्थ सुगम हैं। गौरव भय से छोड़ दिये।

इति श्री भाषा प्रभाकर टीका में पांचवां अध्याय समाप्त हुवा।

अथ प्रत्ययनिरूपणं नाम षष्ठोऽध्यायः ।

एवं प्रतिश्रुतं मात्रावृत्तानुपूर्वकं समादिवृत्तत्रयं तत्प्रसङ्गतोऽन्यच्च तदुपयोगि यत्किञ्चिदभिधाय तेषामुत्पत्तिप्रदर्शनार्थं पैङ्गलेऽत्र चानुक्तानां कविप्रयोगेषु दृश्यमानानां सद्भावोपपत्तये स्वग्रन्थस्य न्यूनतापरिहृतये शिष्याणां कौशल्यचमत्कृतिदिव्यदृष्टित्वप्राप्तये च षष्ठाध्यायमुपक्रमते वक्तुम् ।

प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया ।
संख्या चैवाध्वयोगश्च षडेते प्रत्यया स्मृताः ॥१॥

प्रस्तार इति प्रस्तारः १ नष्टम् २ उद्दिष्टम् ३ एकद्व्यादिलगक्रिया ४ सङ्ख्या ५ चैव अध्वयोगश्च ६ एते षट् प्रत्ययाः प्रतीयन्ते ज्ञायन्ते प्रस्तारादयोऽर्था एभिरिति ते प्रस्तारादिबोधकरणानीत्यर्थः "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुष्वित्यमरः" । स्मृताः पिङ्गलाद्याचार्यैः उद्घाटिताः ॥ मञ्जर्यां गङ्गादासेन तु "प्रस्तारादि पुनर्नोक्तं केवलं कौतुकं हि तत्" इत्युक्तं किन्तु अत्र उक्तान्यभेदज्ञानार्थं स्वग्रन्थस्य न्यूनतादोषपरिहारार्थं च प्रस्तारस्यावश्यकतया तदनुषङ्गेनान्येषां चोपयोगात् पिङ्गलमुन्युक्तेश्चाऽस्य पथः, तदुक्तिः समीचीना नवेति विपश्चित एव विचारयन्तु ॥ १ ॥

अन्वय —

१ प्रस्तारः २ नष्टम् ३ उद्दिष्टम् ४ एकद्व्यादिलगक्रिया ५ संख्या चैव ६ अध्वयोगश्च एते षट् प्रत्ययाः स्मृताः ।

तीन प्रकार के वृत्त कह कर, वृत्तों की उत्पत्ति तथा और छन्दों के संग्रह के लिये और शिष्यबुद्धि के कुशलताप्राप्ति वास्ते एक चमत्कार स्वरूप प्रत्ययों को छठे अध्याय से कहते हैं ।

**प्रस्तार** इति १ प्रस्तार २ नष्ट ३ उद्दिष्ट ४ एकद्व्यादिलगक्रिया ५ संख्या ६ अध्वयोग यह छः प्रत्यय नाम मात्र से कहे हैं। इनसे प्रस्तार भेदादि विज्ञान होता है इससे इनको प्रत्यय कहते हैं । इसी लिये इनका समझना आवश्यक है॥१॥

तथाहि पिङ्गलमुनिनैवैष मार्ग उपलक्षणत्वेन प्रदर्शितः तत्सूत्राणि यथा प्रस्तारविषये

'द्विकौ ग्लौ'[१] ८।२० 'मिश्रौ च'[२] ८।२१ 'पृथग्ला मिश्राः'[३] ८।२२ "वसवस्त्रिकाः[४]॥ ८।२३ ॥ ३ ॥

नष्टोद्दिष्टादीनां प्रस्तारज्ञानाधीनत्वात्प्रस्तारं तावदाह ( उक्ता-त्युक्तादिजातावेकैकस्याः कति २ किम्विधानि च रूपाणि भवन्तीति प्रत्यक्षतो यथास्वरूपं प्रकटीकृत्य प्रदर्शनार्थं प्रस्तारस्तावदुच्यते। प्रस्तारप्रत्ययो नाम समस्तवृत्तसंख्याभेदप्रकाशकशिल्पविशेषज्ञानं तदाह )।

---

(टि०) १ उपरिष्टाद् गुरुं लिखित्वा तदधो लघुं विन्यसेत् इत्येकाक्षरप्रस्तारः। अत्र औत्तराधर्यतो द्वौ ग्लौ ( गुरुलघू ) द्विकौ द्विप्रमाणौ विन्यस्तौ भवतः ( संख्याया अतिशदन्तायाः इति कन् )। २ अनेन द्वितीयाक्षरप्रस्तारं दर्शयति चकारः पूर्वप्रस्तार-समुच्चयार्थः द्विकौ ग्लौ स्थापयित्वा अनन्तरं द्वितीयस्थानेषु मिश्रौ ग्लौ विन्यसेत् गुरुः गुरुणा संश्लिष्टः मिश्र उच्यते लघुश्च लघुना। मिश्रौ इति गकारलकाराभ्यां प्रत्येकमभिसंबध्यते। द्वन्द्वात्परो यः श्रूयते इति न्यायात्। ततश्च प्रथमायामावृत्तौ गकारौ मिश्रौ स्थापयेत्। द्वितीयायां लकाराविति। ततो मध्ये लेखाम् अपनयेत्। एवं चतुःप्रकारो द्व्यक्षरप्रस्तारो भवति। तद्यथा "गौ ल्गौ ग्लौ लौ" इति॥ ३ इदानीं द्व्यक्षरप्रस्तारपूर्वकम् एकैकाक्षर वृद्धया त्र्यक्षरादिप्रस्तारं दर्शयितुमाह पृथगिति द्व्यक्षरप्रस्तारस्य पूर्वन्यायेन द्विकं लेखाविभक्तं स्थापयित्वा तृतीयाक्षरस्थानेषु प्रथमावृत्तौ गकारा मिश्रा दातव्याः। द्वितीयावृत्तौ लकारा मिश्राः ततो मध्ये लेखामपनयेत्। एवं त्रिकः प्रस्तारः सिद्धयति पृथगिति विजातीय-संसर्गमाह तेन प्रथमायामावृत्तौ न लकारप्रवेशः। द्वितीयायां न गकारस्य। एवं त्रिकप्रस्तारं द्विःस्थापयित्वा पृथक् ग्ला मिश्रा दातव्याः। इति चतुरक्षरप्रस्तारः। एवं तत्तत्पूर्वकः पञ्चा-क्षरादिप्रस्तारः कार्यः।

४ एवं पूर्वोक्त त्र्यक्षरप्रस्तारेऽष्टौ त्रिका जायन्ते। तत्तद्द्विगुण २ वृद्धया विस्पष्टं संख्याप्रदर्शनार्थमिदमुपलक्षण सूत्रम्॥

पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ।
यथोपरि तथा शेषं भूयः कुर्य्यादमुं विधिम् ॥२॥

पादे इति सर्वत्र प्रथमाकृतिः, सर्वगुरुकैव सर्वभेदनिदानं प्रादुर्भूतं मुनेः तावत्तदुपक्रमं भेदसाकल्यमित्यत आह सर्वेति सर्वगुरौ सर्वे गुरवो यत्र एवंविधे पादे लिखिते सति तेषु आद्यात्प्रथमात् गुरोः वर्णात् (ऽ) ईदृशाकारचिन्हाद्वा अधः अधस्तात्स्थाने लघुं वर्णं (।) ईदृशचिन्हं वा न्यस्य स्थापयित्वा ततोऽग्रे च यथोपरि ऊर्ध्व, पङ्क्तौ गुरुर्लघुः तच्चिन्हं वा तथा तेनैव प्रकारेण शेषम् आद्यावशिष्टं यावत्पादवर्णान्तं लिखेत् इति शेषः । भूयः पुनः द्वितीयादिपङ्क्तीनामधस्तात् तृतीयादिपङ्क्तावपि अमुम् उक्तम् "आद्याद् गुरोरधो लघुं यथोपरि तथा शेषम्" इति विधिं विधानं कुर्यात् ॥ २ ॥

अन्वयः—

सर्वगुरौ पादे आद्यात् गुरोः अधः लघुंन्यस्य यथा उपरि (पङ्क्तौ) तथा शेषं (पूरयेत्) भूयः अमुं विधिं कुर्यात् ।

नष्टोद्दिष्टादि सब प्रस्तार के आधीन हैं इससे पहले प्रस्तार को कहते हैं। सम्पूर्ण वृत्तों की संख्या भेद और स्वरूप को प्रत्यक्षतो दिखलाने वाले को प्रस्तार प्रत्यय कहते हैं। इसका ज्ञान ही प्रयोजन है। इसे कहते हैं।

पादे इति सर्व गुरु वाले पाद में (जो सब से पहला भेद रखने योग्य है) पहले गुरु (ऽ)के नीचे लघु (।) को लिखके जैसे ऊपर की पङ्क्ति में लघु (।) वा गुरु (ऽ) हों वैसे ही उनके नीचे २ लिखकर पङ्क्ति पूरी करदे। फिर दूसरी पङ्क्ति के नीचे वैसे ही तीसरी पङ्क्ति लिखे अर्थात् प्रथम गुरु (ऽ) के नीचे लघु (।) शेष ऊपर के बराबर लघु (।) गुरु (ऽ) लिखते जावे ॥२॥

ननु एवं कृते तृतीये भेदे उपरिस्थितद्वितीयगुरोरधो लघौ लिखिते आद्यस्थानस्य रिक्तत्वात्तत्र किं लेख्यमित्यत आह ।

ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत् ।
प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः ॥३॥

ऊने इति ऊने न्यूने स्थाने गुरून् वर्णान् (ऽ) ईदृशतच्चिन्हानि वा दद्यात् स्थापयेत्। बहुवचनमुत्तरोत्तरपङ्क्तावपि न्यूने गुरूणां प्राप्त्यर्थं ततश्च "भूयः कुर्यादमुं विधिमित्युक्तं कियत्पर्यन्तं कर्त्तव्यमित्यपेक्षायामवधिमाह यावदिति सर्वलघुः सर्वे लघवो यत्र स सर्वलघुः पादो यावद्भवेत् तावदेव कुर्यात्। छन्दोविचितिः छन्दः सूत्रग्रन्थः तं विदन्ति जानन्तीति ते छन्दोविचितिवेदिन आचार्याः तैः अयमेष प्रस्तारः समाख्यातः कथितः। यथा उक्तायां जातौ प्रथमो गुरुरेकः (ऽ) तदधः लघौ न्यस्ते (।) सर्वलघुपादस्याऽऽयातत्वाद् विरतौ भेदद्वयम्। अत्युक्तायां द्विगुरुः प्रथमः (ऽऽ)। तत्रादिगुरोरधो लघौ दत्ते लगरूपः (।ऽ) द्वितीयो भेदः। ततो द्वितीयस्थानस्थगुरोरधो लघौ न्यस्ते आदिलघोरधः स्थानं रिक्तं सञ्जातं तत्र गुरौ न्यस्ते ग्लरूपः (ऽ।) तृतीयो भेदः। तत आदिगुरोरधो लघौ लिखिते तदग्रे उपरिस्थलघुसदृशे लघौ स्थापिते द्विलघुः (।।) चतुर्थो भेदः सर्वलघु पादरूपत्वात्तस्य तत्रावधेः चत्वार एव भेदाः॥

अन्वयः—

ऊने गुरून् एव दद्यात्। यावत् (पादः) सर्वलघुः भवेत् (तावत् एवमेव कार्यम्) छन्दोविचितिवेदिभिः अयं प्रस्तारः समाख्यातः।

ऐसे करने पर तीसरी पङ्क्ति में ऊपर की लैन के दूसरे स्थान में स्थित (जो पहला गुरु समझा गया) गुरु के नीचे जब लघु लिख दिया तो पहला स्थान जो ऊपर के लघु (।) के नीचे था खाली रह गया वहां क्या लिखें (आगे यन्त्र में देखो) इस प्रश्न पर कहते हैं॥

ऊने इति-खाली स्थान में गुरुओं (ऽ) को ही लिखे जब सब लघु (।) हो जांय तब तक इसी तरह लिखता जाय। यन्त्र में देखो। छन्दोविचिति जानने वालों ने यह प्रस्तार बहुत विचार कर कहा है। इसी लिये कहीं भी इससे अन्यथा नहीं होता। विशेष ज्ञान आगे का यन्त्र कोष्ठ देखने से होता है॥३॥

---

टि०) १ यास्ककृतः। पिङ्गलकृतोऽपि क्वचिदेतन्नाम्ना व्यवहृतः।

तत्रायं प्रस्तारस्य स्थापनप्रकारः ।

| तत्र उक्तायां भेदद्वयम् यथा | अत्युक्तायां भेदचतुष्टयम् यथा | मध्यायां भेदाष्टकम् यथा | एवमग्रेऽपि यथायथं योज्यम् |
|---|---|---|---|

| | | |
|---|---|---|
| १ | ऽ | एकगुरुः |
| २ | । | एकलघुः |

| | | |
|---|---|---|
| १ | ऽऽ | द्विगुरुः |
| २ | ।ऽ | एकलघ्वेकगुरुः |
| ३ | ऽ। | एकगुर्वेकलघुः |
| ४ | ।। | द्विलघुः |

| | | |
|---|---|---|
| १ | ऽऽऽ | मगणः |
| २ | ।ऽऽ | यगणः |
| ३ | ऽ।ऽ | रगणः |
| ४ | ।।ऽ | सगणः |
| ५ | ऽऽ। | तगणः |
| ६ | ।ऽ। | जगणः |
| ७ | ऽ।। | भगणः |
| ८ | ।।। | नगणः |

अयमपि मार्गो मेरुप्रस्तारद्योतकत्वेन मुन्युपज्ञ एव तथा च सूत्रं "परे पूर्णम्" इति पि० सू० ८।३४ अथैतदनुसारं मेरुप्रस्तारः उक्तादिषड्विंशतिवृत्तस्थैकद्व्यादिलगक्रियाविज्ञानार्थो लिख्यते । तस्य चायमुद्धारप्रकारः ॥

तत्र प्रथममेकं चतुरस्रं कोष्ठं लिखित्वा तदध उभयतोऽर्द्धनिष्क्रान्तं कोष्ठद्वयं तदधः कोष्ठत्रयमर्द्धनिष्क्रान्तं तदधस्तथैव चतुष्टयम् । इत्येवं षड्विंशतिं यावत्कोष्ठानि लिखेत् । उपरिकोष्ठे एकाङ्को देयः । तथा प्रतिपङ्क्ति आद्यन्तकोष्ठेषु एकाङ्का एव । तृतीयपङ्क्तौ मध्यमकोष्ठे शून्ये तदुपरिगतौ एकाङ्कावेकीकृत्य द्व्यङ्कम् न्यस्येत् । एवं चतुर्थपङ्क्तौ मध्यकोष्ठोपरिगतकोष्ठद्वयाङ्कमेकीकृत्य

ऽयङ्कौ । एवं सर्वत्रोपरिगतकोष्ठद्वयाङ्कमेकीकृत्याधस्तनकोष्ठे दद्यात् । षड्विंशतिकोष्ठकपङ्क्ति यावत्कार्यम् । तदुक्तं पद्यैः ॥

आदावेकं लिखेत्कोष्ठं तदधो द्वे च संलिखेत् ॥
तदधस्त्रीणि कोष्ठानि चैवं रूपेण वर्द्धयेत् ॥ १ ॥
आदावेकं लिखेत्कोष्ठमेकं मध्यं च पूरयेत् ॥
लेख्यकोष्ठोपरिप्राप्तैरग्रिमाङ्केन संयुतैः ॥ २ ॥ इति

आकरेषु मेरुप्रस्तारो यथा

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | | | | | | | | | | | | | |
| १ | १ | | | | | | | | | | | | |
| १ | २ | १ | | | | | | | | | | | |
| १ | ३ | ३ | १ | | | | | | | | | | |
| १ | ४ | ६ | ४ | १ | | | | | | | | | |
| १ | ५ | १० | १० | ५ | १ | | | | | | | | |
| १ | ६ | १५ | २० | १५ | ६ | १ | | | | | | | |
| १ | ७ | २१ | ३५ | ३५ | २१ | ७ | १ | | | | | | |
| १ | ८ | २८ | ५६ | ७० | ५६ | २८ | ८ | १ | | | | | |
| १ | ९ | ३६ | ८४ | १२६ | १२६ | ८४ | ३६ | ९ | १ | | | | |
| १ | १० | ४५ | १२० | २१० | २५२ | २१० | १२० | ४५ | १० | १ | | | |
| १ | ११ | ५५ | १६५ | ३३० | ४६२ | ४६२ | ३३० | १६५ | ५५ | ११ | १ | | |
| १ | १२ | ६६ | २२० | ४९५ | ७९२ | ९२४ | ७९२ | ४९५ | २२० | ६६ | १२ | १ | |
| १ | १३ | ७८ | २८६ | ७१५ | १२८७ | १७१६ | १७१६ | १२८७ | ७१५ | २८६ | ७८ | १३ | १ |

( एवं षड्त्रिंशत्यत्तरं यावत्पूरणीयम् )

## अथ फलम् ।

अथ द्विकोष्ठायां द्वितीयपङ्क्तौ एकाक्षरपादाया उक्ताया लगाक्रिया । त्रिकोष्ठायां तृतीयपङ्क्तौ अत्युक्ताया एव । इत्येवं क्रमेण षड्विंशतिजातीनां विशेषनिवेशः । स चैकाङ्कोपरिगतप्रतिपङ्क्तिगतद्वितीयकोष्ठस्थाङ्केन ज्ञेयः । तत्र द्वितीयपङ्क्तावेकं सर्वगुरु एकं सर्वलघु उक्तायाम् । अत्युक्तायां १ ऽऽ २यः १ गुरुः १ लघुर्वा ३ यः ॥,

ऐसा २६ कोठे तक चक्र लिख के उसके दोनों किनारों पर एक २ का अङ्क लिखो ऊपर २ के दो दो कोठों के अङ्क जोड़ २ कर नीचे २ के कोठे २६ तक भरते जाओ यह मेरुप्रस्तार होगया।

इसका फल

दूसरी सतर में १ अक्षर की उक्ता के २ भेद। १ सर्वगुरुक, १ सर्वलघुक। तीसरी में अत्युक्ता के १ सर्वगुरु २ रा एकगुरुक और एकलघुक। ४र्थ सर्वलघु। ऐसे चौथी पङ्क्ति में मध्या के इत्यादि देखते जावें।

**इति प्रस्तारः**

**विहिते तावत् प्रस्तारे सर्वगुरुर्भेदः कुत्रास्ते एकगुरुः द्विगुरुश्च कुत्र २ इत्यादि प्रश्नोत्तरार्थमाकरेषु पताकाप्रस्ताराः कथ्यन्ते।**

**एको द्वावथ चत्वारस्ततोऽष्टाविति वर्द्धनम्।**
**पूर्वं परेण संयोज्य तदधो लेखयेद्बुधः॥१॥**
**अन्तिमाङ्कावधिं नैव लङ्घयेदत्र कुत्रचित्।**
**एकत्र लिखितं प्राज्ञः पुनरन्यत्र नो लिखेत्॥२॥**

इसका **भाषार्थ**–एक दो चार इसके आगे आठ इस तरह दूने २ बढ़ाता जाय। पूर्वस्थित अङ्क को पर के साथ जोड़ करके उसके नीचे लिखे, कहीं भी अन्त स्थित अङ्क लङ्घन न करे। और जो एक वार लिखा गया उसको दूसरी वार न लिखे।

इसका **भावार्थ**–जितनी संख्या वाले प्रस्तार में प्रश्न हो उस संख्या में एक और मिलाकर उतने कोष्ठक लिखे। उन में उद्दिष्ट की तरह १ से आगे दूने २ करके अङ्क लिखे। फिर प्रथमाङ्क को दो आदि अङ्कों से जोड़ कर उस (संयुक्त) अङ्क को दूसरे अङ्क से नीचे [दहिने] लिखे। फिर दूसरे को तीसरे के साथ जोड़ के तीसरे कोठे के नीचे रख दो, ऐसे ही उपान्त्य तक योग करते जाओ। अन्तिम अङ्क का जोड़ मत करो क्योंकि उस संख्या का कोई वृत्त नहीं मिलेगा। दूसरे कोठे से नीचे के अङ्क से भी तीसरे कोष्ठ में स्थित चार के अङ्क को युक्त करके उसी पङ्क्ति में लिखो, ऐसे चार को आठ आदि के साथ जोड़ के आठवें अ के नीचे

लिखे। फिर चार अङ्क के नीचे की पङ्क्ति में स्थित अङ्को से अष्टमाङ्कों को संयुक्त कर लिखे। ऐसे ही सब जगह अङ्क समाप्ति तक लिखने पर जहां प्रस्तार से अधिक संख्या आजाय उसे न लिखे, और जो हिन्दसा एक वार लिखा गया हो उसे भी दूसरी वार न लिखे।

इसका फल—पहली पङ्क्ति में सर्वगुरु,स्थान दूसरी में १गुरुस्थान, तीसरी में द्विगुरु स्थान, चौथी में त्रिगुरुस्थान ऐसे वढ़ाते जाना। सब के अन्त में सर्वलघु। उस से उलटा गिनने में १ लघु द्विलघु आदि उपान्त्य तक देखते जाओ॥

## उदाहरणप्रयोगः

एकाक्षरप्रस्तारपताका
[सर्वगुरुः] १ म स्थानस्थितः
[सर्वलघु] २ तीय „

द्व्यक्षरप्र०पताका
१ म स्थाने सर्वगुरुः
२—३ द्वितीयतृतीयस्थाने
१ लघुः १ गुरुर्वा
४ चतुर्थस्थाने सर्वलघुः

३ पताका

| | | | |
|---|---|---|---|
| सर्वगुरुकः | १ | | |
| १ लघुकाः<br>२ गुरुकाः | २ | ३ | ५ |
| २ लघुकाः<br>१ गुरुकाः | ४ | ६ | ७ |
| सर्वलघुकः | ८ | | |

त्र्यक्षरप्रस्तारपताका

यहां १ को २ से जोड़ने से ३ को २ के सामने कोठे में १ को ४ से जोड़ने से ५ को ३ के सामने लिखो। अन्तिम ८ को छोड़ दो, फिर २ को ४ के योग से ६ को ४ के सामने। फिर दूसरी पङ्क्ति में ३ को ४ के साथ योग से ७ को ६ के सामने।

यहां १म सर्वगुरु २। ३। ५वें स्थान में १लघुक। ४। ६। ७ वें स्थान में द्विलघुक। अष्टम स्थान में सर्वलघुक १ भेद जानो।

ऐसे ही नीचे से ऊपर को ८वें स्थान में सर्वलघु १ भेद। इस के ऊपर ४। ६। ७वें स्थानों में १गुरुक तीन भेद। इस के ऊपर २। ३। ५ वें स्थानों में द्विगुरुक ३ भेद जानो।

४ पताका

| | | | | | | |
|---|---|---|---|---|---|---|
| सर्वगुरुकः | १ | | | | | |
| एकलघुकाः त्रिगुरुकाः | २ | ३ | ५ | ९ | | |
| द्विलघुकाः द्विगुरुकाः | ४ | ६ | १० | ७ | ११ | १३ |
| त्रिलघुकाः एक गुरुकाः | ८ | १२ | १४ | १५ | | |
| सर्वलघुकः | १६ | | | | | |

चतुरक्षरप्रस्तारपताका

यहां १ को २ के साथ योग से ३ को २ के दक्षिण में १ को ४ से योग से ५ को ३ के दक्षिण में। १ को ८ से जोड़ने से ९ को ५ के दक्षिण में लिखो १ से १६ का योग अन्तिम होने से नहीं होता।

२ को ४ के योग से ६। ४ के दहिनी ओर। २ को ८ से जोड़ने से १०। ६ के दहिने। २ और १६ का योग नहीं करना। ३ का ४ से योग से ७। १० के दहिने। ५। ४ के योग से ९ एक जगह लिखे होने से करना नहीं चाहिये। ३।८ के योग से ११।७ के दहिने। ३ को १६ से योग नहीं करना। ५। ८ के योग से १३। ११ के दहिने। ४। ८ के योग से १२। ८ के दहिने। ४ और १६ का योग नहीं करना। ६। ८ के योग से १४ ८ के दहिने। १०।८ का योग भी नहीं करना १८वां भेद न होने से,। ७। ८ क योग से १५। १४ के दहिनेकोठे में॥

५ पताका

पञ्चाक्षरप्रस्तारपताका

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| सर्वगुरुकः | १ | | | | | | | | | |
| १ लघुकाः ४ गुरुकाः | २ | ३ | ५ | ९ | १७ | | | | | |
| २ लघुकाः ३ गुरुकाः | ४ | ६ | १० | १८ | ७ | ११ | १९ | १३ | २१ | २५ |
| ३ लघुकाः २ गुरुकाः | ८ | १२ | २० | १४ | २२ | २६ | १५ | २३ | २७ | २९ |
| ४ लघुकाः १ गुरुकाः | १६ | २४ | २८ | ३० | ३१ | | | | | |
| सर्वलघुकः | ३२ | | | | | | | | | |

एकद्व्यादिलगक्रिया–फलाङ्क
युक्ता पञ्चवर्णपताका।




एकद्व्यादिलगक्रियायां कृतायां सर्वगुरुः एको भेदः, एकगुरुका एतावन्त द्विगुरुका इयन्तः इत्यादि फलितम् ते ते च भेदाः कुत्र २ स्थाने विद्यन्ते ? इति प्रश्ने तदुत्तरार्थं फलपताकाप्रस्तार उच्यते।

एकद्व्यादिलगक्रिया से प्रस्तार में सर्वगुरुक १, एकगुरुक इतने द्विगुरुक इतने, त्रिगुरुक इतने, भेद होते हैं यह फलित होता है। वह भेद किस २ स्थान में हैं। इस ज्ञान के लिये फलपताकाप्रस्तार कहा जाता है।

एकद्व्यादिक्रियायास्तु फलिताङ्कानधो न्यसेत् ।
तदूर्ध्वं च पताकाया वैपरीत्येन पङ्क्तितः ॥ १ ॥
उपर्यधो लिखित्वाऽङ्कानूर्ध्वतश्चाल्पसंख्यकम् ।
महासंख्यं ततोऽधोधो विन्यसेच्चानुपौर्व्यतः ॥ २ ॥
एकद्वित्र्यादिभेदानां स्थानज्ञानकृते सुखम् ।
फलयुक्तपताकेयं भणिता मुनिसंमता ॥ ३ ॥

एकेति एकद्व्यादिलगक्रिया के फलित अङ्कों को क्रम से नीचे के कोष्ठों में लिखे। उनके ऊपर पताका की अङ्क पङ्क्तियों को उलटा पलटा करके लिखे। अर्थात् अन्त पङ्क्ति के अङ्क पहली पङ्क्ति में उपान्त्य पङ्क्ति के दूसरी में ऐसे ही सब लिखे ॥१॥ ऊपर नीचे करके अङ्क लिखने चाहिए। परन्तु इसमें यह ध्यान रखना कि सब से ऊपर छोटी संख्या इसके नीचे इस से बड़ी, ऐसे ताल २ कर क्रम से नीचे २ लिखते जाना ॥ २ ॥ यह एक भेद सर्वगुरु कौन स्थान में है। एक गुरु वाले इतने भेद, दो गुरु वाले इतने भेद प्रस्तार में कहां २ हैं? इस प्रश्न के सुख से उत्तर जानने वास्ते पिङ्गलमुनि संमत फलपताका कही है ॥ ३ ॥ ऊपर (मन्दिर) चक्र में देखो—

अथ वृत्तभेदादिज्ञानार्था वर्णमर्कटी ।

मुनिरेखा न्यसेत्तिर्यङ्मुखा, वृत्तीयसंख्यया ।
ऊर्ध्वास्या,स्तन्मध्ये च षट् श्रेणीः क्रमशो लिखेत् ॥१॥
आद्यायामेकतश्चाङ्काः परत्रोद्दिष्टवत्तु ते ।
अधःस्थैरूर्ध्वगान्हत्वा चतुर्थ्यामेनयोः कुरु ॥२॥
पञ्चम्यां लिख षष्ठ्यां च तुरीयार्द्धाननुक्रमात् ।
तृतीयायां च संयोज्य चतुर्थी-पञ्चमीस्थितान् ॥३॥
मर्कटीयं प्रपन्नेन वीक्ष्य चोक्ता मतं सताम् ।

अन्वयः

तिर्यङ्मुखाः मुनिरेखाः (तथा) वृत्तीयसंख्यया उर्ध्वरेखा न्यसेत् । च (पुनः) तन्मध्ये क्रमशः षट् श्रेणीः लिखेत् ॥ १ ॥ (तत्र) आद्यायाम् एकत (आरभ्य) अङ्काः (लेख्याः) तु (पुनः) परत्र उद्दिष्टवत् ते (अङ्काः लेख्याः) एनयोः (द्वयोः श्रेण्योः मध्ये) अधःस्थैः ऊर्ध्वगान् हत्वा (गुणितान्) चतुर्थ्यां कुरु ॥ २ ॥ तुरीयार्द्धान् पञ्चम्यां षष्ठ्यां च लिख । चतुर्थीपञ्चमीस्थितान् ( अङ्कान् ) संयोज्य तृतीयायां (लिख) इयं च वर्णमर्कटी सतां मतं वीक्ष्य रामप्रपन्नेन उक्ता ॥

## भाषार्थः

**मुनी**ति सात आडी रेखा और जितने वृत्त लिखने की इच्छा हो उतनी संख्या से ऊपरमुख वाली लिखो। इनके बीच अङ्कों की ६ पङ्क्तियां क्रम से भर दो ॥१॥ सो जैसे पहली में एक से लेकर १-२-३-४ इत्यादि हिन्दसे लिख दो। इस से नीचे दूसरी में उद्दिष्ट के क्रम से दूने दूने करके जैसे २-४-८-१६ इत्यादि लिखो। फिर इन दोनों में से नीचे की उद्दिष्ट सदृश पङ्क्ति के अङ्कों से उन्हीं के ऊपर ऊपर के कोठों में स्थित अङ्कों को यथाक्रम गुण कर चौथी पङ्क्ति के कोठों में भरते जाओ ॥२॥ (तीसरी लैन अभी खाली रखो) चौथी सतर के कोष्ठकों में बैठे हुए अङ्कों को आध आधा करके पांचवीं और छठी सतर के कोठों की क्रम से पूर्ति कर दो। अब चौथी और पांचवीं सतर के अङ्कों का जोड़ करके तीसरी पङ्क्ति के कोठों को पूरणकर दो। यह इस रीति से जहां तक इच्छा हो बना लो यह वर्णमर्कटी पूर्व आचार्यों के मत को आलोचन करके पं०रामप्रपन्न ने संकलन की है ॥ ३ ॥

नीचे के चक्र से फलसहितस्पष्टप्रतीति होजायगी :—

### त्रयोदशवर्णमर्कटी यथा (चक्रम्)

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | वृत्तानि |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २ | ४ | ८ | १६ | ३२ | ६४ | १२८ | २५६ | ५१२ | १०२४ | २०४८ | ४०९६ | ८१९२ | भेदाः |
| ३ | १२ | ३६ | ९६ | २४० | ५७६ | १३४४ | ३०७२ | ६९१२ | १५३६० | ३३७९२ | ७३७२८ | १५९७४४ | मात्राः |
| २ | ८ | २४ | ६४ | १६० | ३८४ | ८९६ | २०४८ | ४६०८ | १०२४० | २२५२८ | ४९१५२ | १०६४९६ | वर्णाः |
| १ | ४ | १२ | ३२ | ८० | १९२ | ४४८ | १०२४ | २३०४ | ५१२० | ११२६४ | २४५७६ | ५३२४८ | गुरवः |
| १ | ४ | १२ | ३२ | ८० | १९२ | ४४८ | १०२४ | २३०४ | ५१२० | ११२६४ | २४५७६ | ५३२४८ | लघवः |

" ल[1]ऽर्द्धे " ८।२४ " सैके[2] ग् " ८।२५ इति ॥४॥

अथ प्रस्तारशोधनोपयोगिनष्टप्रत्ययमाह–(यदि कस्यचित् पुस्तके प्रस्तारस्य कश्चिद्भेदः कीटादिभक्षणेन नष्टः तेन छान्दसत आगत्य पृष्टं यदमुको मे भेदो नष्टः स कीदृगासीदिति तत्परिज्ञानायेदमारभ्यते ॥ नष्टप्रत्ययो नाम यस्य कस्यचिच्छन्दसो यत्किञ्चिद् द्वितीयं तृतीयं वा वृत्तं नष्टं तस्य प्रस्तारमन्तरेण पुनर्दर्शनज्ञानम्।

**नष्टस्य यो भवेदङ्कस्तस्याऽर्द्धेऽर्द्धे समे च लः।**
**विषमे चैकमाधाय तस्याऽर्द्धेऽर्द्धे गुरुर्भवेत् ॥४॥**

**नष्टस्ये**ति अङ्क इत्यतः परं तत्रेत्यध्याहार्यं। ततश्च नष्टस्य वृत्तस्य योऽङ्कस्तत्र समे सति लो लघुर्लेख्यः तस्मिन्नष्टाङ्के विषमे तु गुरुरित्यर्थादायातम्। ( पैङ्गले तथोक्तेः ) तस्य चार्द्धे अर्द्धे च समे सति लो लघुर्लेख्यः विषमे त्वर्द्धीकरणाऽशक्तेः एकमधिकं तन्मध्ये आधाय क्षिप्त्वाऽर्द्धयेत्। नष्टाङ्के विषमे तु गुरुर्भवेत् लेख्य इत्यर्थः। अर्द्धेऽर्द्धे इति वीप्सायां द्विरुक्तिः तेन यावद्विवक्षितनष्टवृत्ताक्षरसंख्यापूरणं तावत्कुर्यात्। ततश्च अर्द्धे समे लघुः विषमे गुरुः पुनस्तथैव यत्र यत्र विषमता स्यात्तत्रैकमाधायैवार्द्धयेत् यावद्वर्णाक्षरं प्राप्तमिति पर्यवसितम्। यथा कस्यचित्त्र्यक्षरप्रस्तारस्य चतुर्थो भेदो नष्टः तस्य समत्वात्

(टि०) १ यदा एवं विजिज्ञासेत। गायत्र्यां समवृत्तं षष्ठं कीदृशमिति। तदा तमेव षष्ठसंख्याविशेषम् अर्द्धयेत्। तस्मिन् अर्द्धीकृते लघुः एको लभ्यते। ते भूमौ विन्यस्याः। २ इदानीम् अवशिष्टात् त्रिः इति संख्याविषयत्वात् अर्द्धयितुं न शक्यते। तत्र किं प्रतिपत्तव्यम् इत्याह **सैके** इति अर्द्धे इत्यनुवर्तते। विषमसंख्यायाम् एकम् अधिकं निक्षिप्य ततः अर्द्धयेत्, तत्र एको गकारो लभ्यते तं पूर्वलब्धात् लकारात्परतः स्थापयेत् ततो द्विसंख्या अवशिष्यते तत्र तावत् **सैकेगि**ति लक्षणमावर्तनीयं यावत् वृत्ताक्षराणि षट् पूर्यन्ते एवं सख्यान्तरेऽपि योज्यम् ॥

लघुर्लेख्यः (।) पुनरर्द्धेऽवशिष्टौ द्वौ तयोरपि समत्वात् लघुर्लेख्यः (।) पुनरर्द्धेऽवशिष्ट एकः तस्य विषमत्वात् गुरुर्लेख्यः (ऽ) इत्येवं सङ्कलय्य (।।ऽ) सगणो जातः; स नष्ट इति छान्दसोत्तरं सम्पन्नम् विषमस्थले तु पञ्चमे नष्टे पञ्चमस्य विषमत्वाद्गुरुर्लेख्यः (ऽ) तस्यार्द्धीकर्तुमशक्यत्वात् एकं प्रक्षिप्यार्द्धेऽवशिष्टाः त्रयः तत्संख्याया विषमत्वात् पुनर्गुरुर्लेख्यः (ऽ) तत्राप्येकं प्रक्षिप्यार्द्धे कृतेऽवशिष्टौ द्वौ तत्संख्यायाः समत्वात् लघुर्लेख्यः (।) संकलिते (ऽऽ।) तगणः सम्पन्नः (षष्ठे नष्टे तस्य समत्वात् लघुर्लेख्यः (।) तस्यार्द्धे कृते त्रयो जाताः तेषां विषमत्वात् गुरुर्लेख्यः (ऽ) पुनः एकं प्रक्षिप्यार्द्धे कृते द्वौ अवशिष्टौ तयोः समत्वात् लघुर्लेख्यः (।) एवञ्च संकलने (।ऽ।) जगणो जातः स एव तदुत्तरम्। अयमपि पन्थाः पिङ्गलमुन्युपज्ञः तथा च सूत्रे उपर्युक्ते ॥

**अन्वयः**

नष्टस्य यः अङ्को भवेत् ( तस्मिन् विषमे गुरुः समे च लघुर्लेख्यः इति गुरुलक्षयम् ) तस्य अर्द्धे २ समे लघुः लेख्यः । विषमे (च) अर्द्धे २ गुरुः लेख्यः । विषमे एकम् (अपरं तत्र) आधाय (अर्धं कार्यमिति शेषः) ।

**भाषार्थः—**

**नष्टस्ये**ति यदि किसी के पत्र में प्रस्तार का कोई भेद नष्ट हो गया हो उसके निकालने का उपाय नष्ट-प्रत्यय है। नष्टभेद निकालना ही इसका प्रयोजन है। इस लिये क्रमप्राप्त नष्ट-प्रत्यय लिखते हैं ।।

नष्टभेद का जो अङ्क (हिन्दसा) हो वह यदि विषम १।३।५।७।९ इत्यादि रूप हो तो पहले गुरु (ऽ) लिख लेना, सम २।४।६।८।१० इत्यादि रूप हो तो लघु (।) लिख लेना, फिर उसको आधा२ करते जाना । जब तक वृत्त समाप्त न हो, वह आधा२ सम हो तो लघु लिखो विषम आध में गुरु लिखो । विषम का आध हो नहीं सकता अतः उसमें एक और डाल करके आधा करना चाहिये ॥४॥

**इति नष्टप्रत्ययः ।**

"प्रतिलोमगणं द्विर्लाद्यं"[1] ८।२६ "ततोऽप्येकं जह्यात्"[2] ८।२७ इति पि० सू०

अथोद्दिष्टप्रत्ययमाह (यदि केनचिच्छान्दसस्य परीक्षार्थं प्रस्तारस्य यं कंचिद्भेदं भूमौ समुल्लिख्य पृष्टः कतमोऽयं भेद इति तज्ज्ञानायोद्दिष्टप्रत्ययः। स च यस्य कस्यचिच्छन्दसः किमपि वृत्तं पठित्वा इदं वृत्तं प्रस्तारे कतितममिति केनचित् पृष्टे सति तत्कथनोपायज्ञानम्)॥

उद्दिष्टं द्विगुणानाद्यादुपर्यङ्कान्समालिखेत्।
लघुस्था ये तु तत्राङ्कास्तैः सैकैर्मिश्रितैर्भवेत् ॥५॥

उद्दिष्टमिति यो भेदः पृष्टः तस्य आद्याद्वर्णादारभ्य अन्तिमपर्यन्तम् उपरि २ द्विगुणान् २ अङ्कान् समालिखेत् आद्यवर्णशिरसि एककं दत्त्वा तदग्रे द्विगुणान् २ इत्यर्थः। ये तु तत्र तेषूपरिस्थितेषु लघुस्था लघुवर्णशिरःस्थाः अङ्काः तैः सैकैः एकेनाधिकेन सहितैः मिश्रितैः संयोजितैः पिण्डीकृतैरिति यावत् सद्भिः उद्दिष्टं नाम प्रत्ययः कथितः। यथा केनचित्पृष्टं "रो मृगी" (ऽ।ऽ) इति कतमो भेदः त्र्यक्षरप्रस्तारे?, इति तत्र आद्योपरि एककं दत्त्वा द्वितीयोपरि द्विकं तृतीयोपरि चतुष्कं

---

(टि०) १ उद्दिष्टवृत्तसंख्यापरिज्ञानार्थमिदमाह **प्रती**ति यस्य वृत्तस्य संख्या जिज्ञासेत तत् भूमौ प्रस्तारयेत्। ततः तस्यान्ते यो लकारः सजातीयापेक्षया तमादौ कृत्वा प्रातिलोम्येन द्विरावर्तयेत्, तत्र निराकाराया आवृत्तेरसम्भवात् पृथगातिक्रमे कारणाभावात् एकसंख्या लभ्यते ततश्च एकसंख्याङ्कम् अन्त्यलकारस्य अधस्तात् स्थापयित्वा द्विगुणयेत्। पुनस्तदपि पूर्वस्यैव यावन्ति वृत्ताक्षराणि प्रातिलोम्येन समाप्यन्ते, तत्र याः संख्या निष्पद्यन्ते तावतिथं तद्वृत्तम् इति॥ २ तत्र विशेषमाह **तत** इति पूर्वोक्ते कर्मणि क्रियमाणे यदि सा संख्या गकारस्थानम् आपद्यते तदा तां द्विगुणयित्वा ततः संख्यासमुदायात् एकं त्यजेत् ततः पूर्वोक्तं कर्म कुर्यात्। ततः परिपूर्णत्वात् तद्वृत्तसंख्या सिद्ध्यति॥

न्यस्येत् यथा [ १ २ ४ / ऽ । ऽ ] अत्र लघुस्थो द्व्यङ्कः एकेन मिश्रणे संजाताः त्रयः इत्ययं तृतीयो भेद इति सम्पन्नमुत्तरम् । चतुरक्षरप्रस्तारे केनचित्पृष्टं यत् (।ऽ।।) इत्ययं कतमो भेद इति तत्र प्रथमोपरि एककं द्वितीयोपरि द्विकं तृतीयोपरि चतुष्कं चतुर्थोपरि अष्टकं न्यस्येत् यथा { १ २ ४ ८ / । ऽ । । } अत्र लघूपरिस्थिता अङ्काः (१।४।८) एकक‌चतुष्काष्टकाः तन्मिश्रणे संजाताः त्रयोदश एकेन मेलने चतुर्दश ततश्चायं चतुर्दशो भेद इत्युत्तरं समजनि ॥ अयमपि मार्गः पिङ्गलमुनिनैवोद्घाटि । तथाहि तत्सूत्रे उपर्युक्ते ॥

अन्वयः

उद्दिष्टमिति आद्यात् (वर्णात् लघु (।)गुरु(ऽ)चिह्नान्तराद्वा)उपरि द्विगुणान् अङ्कान् समालिखेत् तत्र ये लघु (।)स्था अङ्काः तैः सैकैः मिश्रितैः उद्दिष्टं भवेत् ।

भाषार्थः—

जब कभी किसी पुरुष ने किसी भेद को लिख के छान्दस की परीक्षा वास्ते आकर पूछा। कि यह कितनवां भेद है ? उस ज्ञानोपाय का नाम उद्दिष्ट-प्रत्यय है। उस भेद की संख्या निकालना इसका प्रयोजन है । इसकी रीति कहता है ।

**उद्दिष्टमिति** पहिले वर्ण वा लघु (।) गुरु (ऽ) निशान से लेकर ऊपर दूने२ करके अङ्क, अन्त तक लिखे । अर्थात् प्रथम ऊपर एका, दूसरे पर दूआ,तीसरे पर चौका, चतुर्थ पर आठा इत्यादि २ उन अङ्कों में जो लघुओं (।) पर अङ्क हैं उनके बीच एक और मिला कर मिश्रित करे, अर्थात् पिण्ड बनावे जो अङ्क निकले वह उतनवां ही भेद हुआ। इसी को उद्दिष्टप्रत्यय कहते हैं । इसका विशेष स्वरूप उदाहरण ऊपर रत्नसंग्रह व्याख्या में देखो ॥ ५ ॥

इति उद्दिष्टप्रत्ययः ॥

" परे पूर्णम् " ८। ३४ इति पि० सू०

अथोक्तादिषु सर्वैकद्वित्र्यादिगुरुलघ्वादिपादकवृत्तकथनद्वारा प्रस्तारशोधनायैकद्व्यादिलगक्रियामाह ( एकद्व्यादिलगक्रियाप्रत्ययो नाम अस्मिंश्छन्दसि सर्वगुरूणि वृत्तानि कति ? द्विगुरूणि त्रिगुरूणि वा कति ? तथा सर्वलघूनि द्विलघूनि त्रिलघूनि वा कतीत्यादिशङ्कायामियन्तीति ज्ञानम् )।

वर्णान्वृत्तभवान्सैकानौत्तराधर्य्यतः स्थितान् ।
एकादिक्रमतश्चैतानुपर्य्युपरि निक्षिपेत् ॥६॥
उपान्त्यतो निवर्तेत त्यजेदेकैकमूर्ध्वतः ।
उपर्य्याद्याद्गुरोरेवमेकद्व्यादिलगक्रिया ॥७॥

१ अनेन एकद्व्यादिलघुक्रियासिद्ध्यर्थं यावत् अभिमतं प्रथमप्रस्तारवत् मेरुप्रस्तारं दर्शयति, उपरिष्टात् एकं चतुरस्त्रकोष्ठं लिखित्वा तस्य अधस्तात् उभयतः अर्द्धनिष्क्रान्तं कोष्ठकद्वयं लिखेत्, तस्य अपि अधस्तात् त्रयं तस्य अपि अधस्तात् चतुष्टयं यावदभिमतं स्थानम् इति प्रथममेरुप्रस्तारः। तस्य प्रथमे कोष्ठे एकसंख्यां व्यवस्थाप्य लक्षणम् इदं प्रवर्त्तयेत। तत्र परे कोष्ठे यत् वृत्तसंख्याजातं तत् पूर्वकोष्ठयोः पूर्णं निवेशयेत्। तत्र उभयोः कोष्ठयोः एकैकम् अङ्कं दद्यात्। ततः तृतीयायां पङ्क्तौ पर्य्यन्तकोष्ठयोः परकोष्ठगतम् एकैकम् अङ्कं दद्यात् मध्यकोष्ठे तु परकोष्ठद्वयाङ्कम् एकीकृत्य पूर्णं निवेशयेत् इति पूर्णशब्दार्थः। चतुर्थ्यां पङ्क्तौ अपि पर्य्यन्तकोष्ठयोः एकैकम् एव स्थापयेत् मध्यमकोष्ठयोस्तु परकोष्ठद्वयाङ्कम् एकीकृत्य पूर्णं त्रिसंख्यारूपं स्थापयेत्। उत्तरत्रापि अयम् एव न्यासः। तत्र द्विकोष्ठायां पङ्क्तौ एकाक्षरस्य विन्यासः। तत्रैकं सर्वगुरु एकं सर्वलघु भवति। तृतीयायां पङ्क्तौ द्व्यक्षरस्य प्रस्तारः। तत्र एकं सर्वगुरु द्वे एकलघुनी एकं सर्वलघु इति कोष्ठक्रमेण वृत्तानि भवन्ति। चतुर्थ्यां पङ्क्तौ त्र्यक्षरस्य प्रस्तारः। तत्र एकं सर्वगुरु त्रीणि एकलघूनि त्रीणि द्विलघूनि एकं सर्वलघु। तथा पञ्चमादिपङ्क्तौ अपि सर्वगुर्वादि सर्वलघ्वन्तम् एकद्व्यादिलघु द्रष्टव्यम् इति ॥

वर्णानीति वृत्तभवान् उक्तादिनिष्ठान् वर्णान् वर्णसंख्याकान् एककान् अङ्कानित्यर्थः सैकान् एकेन अधिकेन एककेन सहितान् औत्तराधर्यतः उत्तराधरभावेन स्थितान् कुर्यादिति शेषः। एतान् पूर्वमुत्तराधरभावेन स्थापितानङ्कान् एकद्वित्र्यादिक्रमेण उपर्युपर्यङ्के निक्षिपेत् मेलयेत्। मेल्यमानसमसंख्यया उपरिक्षेपो मेलनं नतु स्वस्यैव स्वरूपः तत्स्थाने शून्यताप्रसक्त्या द्वितीयादिमेलनावृत्त्यभावापत्तेः॥ उपान्त्यत इति उपान्त्यम् अन्त्यसमीपं अधःस्थस्य पूर्वमुपरि २ मेलने सर्वोपरिस्थोऽन्त्यो ज्ञेयस्तदधोभावी चोपान्त्योऽङ्कः तत उपान्त्यपर्यन्तमेलनं कृत्वेत्यर्थः तमन्त्येऽमेलयित्वा ऊद्र्ध्वतः ऊर्ध्वत्यावृत्यैकैकं त्यजन् निवर्तेत विरमेत्। एवं कृते आद्यात् प्रथमाद् गुरोः भेदात् उपरि अनन्तरम् एकद्व्यादिलगक्रिया अयम् एकलघुः भेदः अयं द्विलघुः भेदः, अयं त्रिलघुः भेदः, तथाऽयमेकगुरुरयं द्विगुरुः भेदः, इत्यादिक्रिया ज्ञेयेति शेषः। सर्वोपरिस्थः सर्वगुरुः सर्वाधःस्थः सर्वलघुरिति संप्रदायः॥ यथा त्र्यक्षरे वर्णसमसंख्याकान् त्रीन् एकेनाधिक्ये च चतुरः एककान् लिखेत् तद्यथा { १ १ १ १ } ततोऽधस्तनम् एकाङ्कं तदुपरिस्थैकाङ्के संयोज्य द्व्यङ्कं कुर्यात् तद्यथा { १ १ २ १ १ १ } ततो द्व्यङ्कं तृतीयैकके { ३ २ १ १ १ १ १ } त्र्यङ्कन्तु न मेलयेत् 'उपान्त्यतो निवर्तेत' इत्युक्तेः, पुनरधस्तनं द्वितीये मेलयेत् इति संप्रदायः। तद्यथा { ३ २ ३ १ १ १ १ १ १ } एवमेकः सर्वगुरुः उपरिस्थः ततश्च सोपानद्वितीयपादन्यासस्थाने स्थितस्त्र्यङ्क इति त्रय एकगुरुकाः पुनः तदधः पादन्यासस्थानेपि त्र्यङ्क इति त्रय एव द्विगुरुकाः। एवं सर्वाधःस्थे सोपानस्य पादन्यासस्थाने एकाङ्कः इति एकः सर्वलघुः तत उपरिस्थत्र्यङ्केन एकलघुकाः त्रयः पुनरुपरिस्थ त्र्यङ्केन द्विलघुका अपि त्रय एवेति सर्वत्रैवं ज्ञेयम्॥

अन्वयः

वर्णानिति सैकान् वृत्तभवान् वर्णान् औत्तराधर्यतः स्थितान् (कुर्यादिति शेषः) एतान् च एकादिक्रमतः उपरि उपरि निक्षिपेत्।

उपान्त्यतो निवर्तेत ऊर्ध्वत एकैकं त्यजेत् (एवम् उपर्याद्याद् गुरोः एकद्व्यादिलगक्रिया भवतीति।

## भाषार्थः

सब प्रस्तारों के सभी भेदों के एक २ रूप में लघु-गुरु संख्यास्वरूपों के स्पष्ट तो ज्ञान का उपाय एकद्व्यादिलगक्रिया है ॥ १।१ भेद करके प्रस्तार के सब स्वरूप लघु गुरु देखना इसका प्रयोजन है ॥ उसकी रीति कहते हैं ॥

वृत्त में जितने वर्ण (संख्या) हों उनमें एक और मिला के उतने एकक बनाकर ऊपर नीचे लिखो। इन्हें १।१ के क्रम से ऊपर २ की दूसरी पङ्क्ति में जोड दो। अन्त्य के समीप का अङ्क ऊपर मत जोडो ऊपर से एक एक अङ्क त्याग दो अर्थात् जुदा करलो उन जुदा किये अङ्कों में ऊपर के सर्वगुरुक प्रथम भेद से नीचे तक गिनते जाओ यानी पहला भेद सर्वगुरुक, २ रा एकगुरुक, ३ रा द्विगुरुक इत्यादि २ ऐसे ही सब से नीचे सर्वलघुक उसके ऊपर एकलघुक एवं ३रा ऊपरका द्विलघुक इत्यादि। इसको एकद्व्यादिलगक्रिया कहते हैं नीचे यन्त्र में देखो ॥ ६–७ ॥

### चतुरक्षरजातिसोपानम्।

| | | | | |
|---|---|---|---|---|
| १ | | | | |
| १ | ४ | | | |
| १ | ३ | ६ | | |
| १ | २ | ३ | ४ | |
| १ | १ | १ | १ | १ |

### पञ्चाक्षरजातिसोपानम्।

| | | | | | |
|---|---|---|---|---|---|
| १ | | | | | |
| १ | ५ | | | | |
| १ | ४ | १० | | | |
| १ | ३ | ६ | १० | | |
| १ | २ | ३ | ४ | ५ | |
| १ | १ | १ | १ | १ | १ |

### नवाक्षरजातिसोपानम्।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | | | | | | | | | सर्वगुरुः |
| १ | ९ | | | | | | | | एकगुरुः अष्टलघुः |
| १ | ८ | ३६ | | | | | | | द्विगुरुः सप्तलघुः |
| १ | ७ | २८ | ८४ | | | | | | त्रिगुरुः षड्लघुः |
| १ | ६ | २१ | ५६ | १२६ | | | | | चतुर्गुरुः पञ्चलघुः |
| १ | ५ | १५ | ३५ | ७० | १२६ | | | | पञ्चगुरुः चतुर्लघुः |
| १ | ४ | १० | २० | ३५ | ५६ | ८४ | | | षड्गुरुः त्रिलघुः |
| १ | ३ | ६ | १० | १५ | २१ | २८ | ३६ | | सप्तगुरुः द्विलघुः |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | अष्टगुरुः एकलघुः |
| १ | १ | १ | १ | १ | १ | १ | १ | ११ | सर्वलघुः |

सोपानफलानि पृथक्कृत्य लिख्यन्ते।

तत्र त्र्यक्षरजातेः सोपानफलम्

| | | |
|---|---|---|
| | १ | सर्वगुरुकः |
| द्विलघुकाः | ३ | एकगुरुकाः |
| एकलघुकाः | ३ | द्विगुरुकाः |
| सर्वलघुः | १ | |

चतुरक्षरजातेः सोपानफलम्

| | | |
|---|---|---|
| | १ | सर्वगुरुकः |
| त्रिलघुकाः | ४ | एकगुरुकाः |
| द्विलघुकाः | ६ | द्विगुरुकाः |
| एकलघुकाः | ४ | त्रिगुरुकाः |
| सर्वलघुः | १ | |

पञ्चाक्षरजातेः सोपानफलम्

| | | |
|---|---|---|
| | १ | सर्वगुरुकः |
| चतुर्लघुकाः | ५ | एकगुरुकाः |
| त्रिलघुकाः | १० | द्विगुरुकाः |
| द्विलघुकाः | १० | त्रिगुरुकाः |
| एकलघुकाः | ५ | चतुर्गुरुकाः |
| सर्वलघुः | १ | |

नवाक्षरजातिसोपानफलम्

| | | | |
|---|---|---|---|
| | १ | भेदः | सर्वगुरुकः |
| अष्टलघुकाः | ९ | भेदा | एकगुरुकाः |
| सप्तलघुकाः | ३६ | भेदा | द्विगुरुकाः |
| षड्लघुकाः | ८४ | ,, | त्रिगुरुकाः |
| पञ्चलघुकाः | १२६ | ,, | चतुर्गुरुकाः |
| चतुर्लघुकाः | १२६ | ,, | पञ्चगुरुकाः |
| त्रिलघुकाः | ८४ | ,, | षड्गुरुकाः |
| द्विलघुकाः | ३६ | ,, | सप्तगुरुकाः |
| एकलघुकाः | ९ | ,, | अष्टगुरुकाः |
| सर्वलघुः | १ | भेदः | |

तथा तृतीयपङ्क्तावेकं सर्वगुरु सर्वलघु च द्वे एकगुरुके एकलघुके च अत्युक्तायाम्। चतुर्थपङ्क्तावेकं सर्वगुरु सर्वलघु च त्रीण्येकगुरुकाणि द्विलघुकानि च त्रीण्येव द्विगुरुकाणि द्विलघुकानि च। एवं सर्वत्र एकद्वित्रिचतुर्लगक्रिया ज्ञेयेति। (त्रु०)

"द्विरर्द्धे"[1] ८।२८ "रूपे शून्यम्"[2] ८।२९ "द्विः शून्ये"[3] ८।३०

"तावदर्द्धे तद्गुणितम्"[4] ८।३१ "द्विर्द्व्यूनं तदन्तानाम्"[5] ८।३२

---

(टि०) १ प्रस्तारात् विना वृत्तसंख्यापरिज्ञानार्थमाह। **द्विरि**ति अपनीते इति अध्याहारः यदा जिज्ञासेत षडक्षरे छन्दसि कति वृत्तानि भवन्ति। तदा तां छन्दोऽक्षर संख्यां भूमौ स्थापयित्वा ततः अर्द्धमपनयेत्। तस्मिन् अपनीते द्वौ लभ्येते। ततस्तां द्विसंख्यां भूमौ पृथक् प्रस्तारयेत्। ततः शेषास्त्रयः अक्षरसंख्यायां भवन्ति। तेषामर्द्धयितुं अशक्यत्वात् किं कर्तव्यम् इत्याह २ **रूपे** इति विषमसंख्यातः रूपम् अपनीय तस्मिन् अपनीते शून्यं लभ्यते। तत् पूर्वलब्धायाः द्विसंख्यायाः अधस्तात् स्थापयेत् ततः द्विसङ्ख्या अवशिष्यते ततः अर्द्धे अपनीते पुनः द्विसंख्या लभ्यते 'तां शून्याधस्तात् स्थापयेत् ततः रूपे शून्यं लभ्यते (२) तत् द्विसंख्यायाः अधस्तात् स्थापयेत् ततः किं कर्तव्यम् इत्याह ३ **द्विरि**ति शून्यस्थाने द्विरावृत्तिं कुर्य्यात् तत्र निराकारायाः आवृत्तेः असंभवात् प्रथमातिक्रमे कारणाभावात् एकसंख्या लभ्यते तां शून्ये स्थापयित्वा द्विगुणयेत् ततः द्वौ भवतः तस्य उपरिष्टात् अर्द्धस्थानं द्विसंख्याङ्क तत् अपनीय तस्य स्थाने तं द्विसंख्याङ्कं स्थापयेत्। अनन्तरम् इदं कार्यम् इत्याह ४**तावदि**ति यत् अर्द्धस्थाने स्थितं संख्याजातं तत्तावद्गुणितं कुर्यात् एतत् उक्तं भवति स्वसंख्याया एव गुणयितव्यम् इति। ततः द्वौ द्वाभ्यां गुणितौ चत्वारः भवन्ति तेषाम् उपरिष्टात् शून्यस्थानं तत्र तान् आरोपयेत्। अनन्तरं द्विः शून्ये इति द्विगुणिता अष्टौ भवन्ति, तान् अपि अर्द्धस्थाने निधाय तावद् गुणान् कुर्यात्। ततः अष्टौ अष्टाभिः गुणिताः चतुःषष्टिः भवन्ति गायत्रीसमवृत्तानि। अनेन एव न्यायेन अष्टाविंशत्यधिकशतम् उष्णिहः। षट्पञ्चाशदधिके द्वे शते अनुष्टुभः। द्वादशोत्तराणि पञ्च शतानि बृहत्याः। चतुर्विंशत्यधिकं सहस्रं पङ्क्तेः अष्टचत्वारिंशदधिके द्वे सहस्रे त्रिष्टुभः। षण्णवत्यधिकानि चत्वारि सहस्राणि जगत्याः। एवम् अतिछन्दसां कृतीनां च द्रष्टव्यम्। ५ **द्विर्द्व्यूनमि**ति गायत्र्यादिवृत्तसंख्याजातं द्विगुणीकृत्य द्वाभ्याम् ऊनं कुर्य्यात्। तत्तदन्तानां परिमाणं भवति, यस्य छन्दसः संज्ञा द्विगुणिता तस्यार्द्धेन तन्न्यूनं पूर्वोक्तेन वृत्तानां सङ्ख्या भवति इत्यर्थः॥३२॥

"परेण पूर्णम्"[1] ८ ३२ इति पि० सू०

अथावसरप्राप्तं संख्याप्रत्ययमाह (संख्याप्रत्ययो नाम प्रस्तारं विनापि तत्तच्छन्दसामेतावन्ति २ वृत्तानीति वृत्तसंख्यापरिज्ञानम्) ॥

लगक्रियाङ्कसन्दोहे भवेत्संख्या विमिश्रिते ॥

( प्रकारान्तरमाह )

उद्दिष्टाङ्कसमाहारः सैको वा जनयेदिमाम् ॥८॥

लगेति लगक्रियायां पूर्वोक्तायां येऽङ्काः तेषां सन्दोहे समूहे विमिश्रिते परस्परं योजिते सति संख्या भवेत् । यस्य वृत्तस्य संख्या जिज्ञासेत तस्यैव लगक्रियायां यावन्तोऽङ्काः फलिताः तानन्योन्यं संयोज्य संख्यासिद्धिरित्यर्थः । यथा त्र्यक्षरस्य लगक्रियाफलिताङ्काः (१-३-३-१) एकत्रित्र्येकास्तेषां मेलने सञ्जाता अष्टौ इति सा भेद (प्रस्तार) संख्या चतुरक्षरे च (१ ४-६-४-१) एकचतुःषट्चतुरेकाः तेषां मेलने च षोडशेति सैवात्र सङ्ख्या। प्रकारान्तरेण संख्यामाह उद्दिष्टेति सैक एकेनाधिकेन सहितः उद्दिष्टाङ्कानां पूर्वोक्तानां यः समाहारः मेलनं वाऽथवा इमां संख्यां जनयेत् उत्पादयेत् । यथा त्र्यक्षरे एकद्विचतूरूपा उद्दिष्टाङ्काः मेलने सप्त एकेन योजने अष्टाविति सा तस्य संख्या । चतुरक्षरे एकद्विचतुरष्टाङ्कमेलने एकयोजने षोडशेति सा तस्य सङ्ख्या इदं चोपलक्षणं प्रस्तारगणनयापि संख्याज्ञानसिद्धेः सूत्रेषु तथाप्युक्तेश्च प्रकारद्वयमपि पैङ्गले यथोक्तम् ।

अन्वयः ।

लगेति लगक्रियाङ्कसन्दोहे विमिश्रिते सति संख्या भवेत् (प्रकारान्तरेणाह) सैक उद्दिष्टाङ्कसमाहारो वा इमां संख्यां जनयेत्

---

१ परेणेति तत् एतत् छन्दोवृत्तसङ्ख्याजातं द्विगुणितं पूर्णमेव स्थापयितव्यं न द्व्यूनम् । परे छन्दसि जिज्ञासिते तत् सङ्ख्याजातं द्विगुणितं परस्य छन्दसः वृत्तानां सङ्ख्या भवति । तद् यथा । चतुःषष्ठिः गायत्रीसमवृत्तानां संख्या द्विगुणिता सती परस्य उष्णिहः समवृत्तसंख्या अष्टाविंशशतं भवति ॥३२॥

भाषार्थः—

अब अवसर प्राप्त संख्या-प्रत्यय कहते हैं। प्रस्तार देखने निकालने विना ही भेदों की इयत्ता अर्थात् किस २ जाति में कितने २ भेद हैं यह जानने का उपाय संख्या प्रत्यय कहा जाता है। इसकी रीति कहते हैं।

लगेति एक द्व्यादिलगक्रिया के फलित अङ्कों का समुदाय आपस में मिला यानी पिण्ड बना लो तो संख्या निकल आती है। अथवा एक अधिक से युक्त उद्दिष्ट प्रत्यय का अङ्कसमूह इस (संख्या) को निकाल सकता है॥८॥

**अथाऽध्वयोगप्रत्ययः। यदि केनचिच्छान्दसतः पृष्टं यदमुकवृत्तस्य प्रस्तारलेखनार्थं कियन्मितं पत्रमपेक्षितमिति तज्ज्ञानायाध्वयोगप्रत्ययः स च वृत्तप्रस्तारलेखार्थं पत्रादिस्थानेयत्ताबोधनं नाम॥**

अब क्रमप्राप्त अध्वयोग-प्रत्यय कहते हैं। यदि किसी ने छन्दोवेत्ता से आकर पूछा कि अमुक वृत्त के प्रस्तार लिखने वास्ते कितना कागज वा स्थान चाहिये इसके उत्तर ज्ञान का उपाय अध्वयोगप्रत्यय है उसका ज्ञान प्रयोजन है। इसकी रीति कहते हैं।९।

**अत्र स्फुटप्रत्ययत्वात् पिङ्गलमुनिर्न सूत्रयाञ्चकार।**

## संख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्तितः॥
## वृत्तस्याङ्गुलिकी व्याप्तिरधः कुर्यात्तथाङ्गुलिम्॥९॥

**संख्येति या पूर्वपद्यज्ञाततत्तत्संख्या तदङ्को द्विगुणा द्वौ गुणौ आवृती यस्याः सा तथा एकेन संख्यया ऊना रहिता सती सद्भिः सुधीभिः अध्वा मार्गः लेखनस्थानेयत्ता प्रकीर्तितः उक्तः अत्रोपपत्तिमाह वृत्तस्येति वृत्तस्य वृत्तप्रस्तारस्य व्याप्तिः व्यासंतो व्यापनम् (स्थानम्) अङ्गुलिमिता भवति। आङ्गुलिकीं व्याप्तिमिति पाठे मुक्तमिति शेषः। एतच्चोपलक्षणं तेन लेखकप्रक्रियामानमात्रं गृह्यते। तथा अधः गुरुलघुसंकेतलेखव्याप्तेः निम्नस्थाने अङ्गुलिं अङ्गुलिमितस्थानमित्यर्थः रिक्तामिति शेषः कुर्यात् अन्यथा स्पष्टतयाऽप्रतीतेः अरस्यतापातेन अचाक्षुष्यत्वप्रसङ्गः। यथा त्र्यक्षरप्रस्तारलेखनार्थं कियत्परिमितं पत्रमानयामीति शिष्यादिप्रश्ने त्र्यक्षरप्रस्तारीयाम् अष्टसंख्यां द्विगुणं कृत्य सञ्जातां षोडशसंख्याम् एकेन ऊनयेत् ततो**

जाता पञ्चदशेति पञ्चदशाङ्गुलिपरिमितस्थानमपेक्षितमित्युत्तरं सम्पन्नम् इदमपि लेखनयोग्यस्थानस्योपलक्षणम् ।

अन्वयः—

संख्यैवेति संख्यैव द्विगुणा एकोना च सद्भिः अध्वा प्रकीर्तितः (यतः) वृत्तस्य आङ्गुलिकी व्याप्तिः तथा (एकाम्) अङ्गुलिम् अधः (रिक्तां) कुर्यात् ॥

संख्येति वृत्तभेदसंख्या को द्विगुणा (दूना) करके एक से कम कर दो तो पण्डित पुरुषों ने अध्वा अर्थात् प्रस्तार लिखने की जगह कही है । इसकी उपपत्ति कहते हैं क्योंकि वृत्त की १ अंगुल भर व्याप्ति (चौडाई) होनी चाहिये और नीचे १ अङ्गुल मात्र खाली सफेदी स्पष्टता के लिये रहनी चाहिये । यन्त्र देखने से स्पष्ट हो सकता है॥६॥

अत्र च अङ्गुल्यष्टकमितस्थानं गुरुलघुरूपप्रस्तारलेखार्थम् अङ्गुलिसप्तकमितं च रिक्तं श्वेतिमाढ्यम् यथाः—

| | | |
|---|---|---|
| १ | ऽ ऽ ऽ | प्रस्तारस्थानम् |
| २ | | रिक्तस्थानम् |
| ३ | । ऽ ऽ | प्रस्तार० |
| ४ | | रिक्त० |
| ५ | ऽ । ऽ | प्रस्तार० |
| ६ | | रिक्त० |
| ७ | । । । | प्रस्तार० |
| ८ | | रिक्त० |
| ९ | ऽ ऽ । | प्रस्तार० |
| १० | | रिक्त० |
| ११ | । ऽ । | प्रस्तार० |
| १२ | | रिक्त० |
| १३ | ऽ । । | प्रस्तार० |
| १४ | | रिक्त० |
| १५ | । । । | प्रस्तार० |

एष प्रत्ययो मुनिना नोक्तः साधारणत्वात् स्फुटं विज्ञेयत्वाच्च "षष्ठः प्रत्ययोऽध्वयोगपरिच्छित्तिः" इति कस्यचिद्वाक्यमत्र प्रामाणिकत्वेन नारायणभट्टेनोक्तं दृश्यते ॥६॥

अधुनाऽवसितप्रतिज्ञाभरो ग्रन्थकारः श्रोतृप्रवृत्तिसाधनं स्ववंशं कीर्तयन्नुपसंहरति ॥

वंशेऽभूत्कश्यपस्य प्रकटगुणगणः शैवसिद्धान्तवेत्ता
विप्रः पव्येकनामा विमलतरमतिर्वेदतत्त्वार्थबोधे ।
केदारस्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्तः
छन्दस्तेनाभिरामं प्रविरचितमिदं वृत्तरत्नाकराख्यम् ॥ १०

वंशेति कश्यपस्य ऋषेः वंशेऽन्वये प्रकटो गुणानां दयादाक्षिण्यादीनां गणः समुदायो यत्र स तथा शैवसिद्धान्तानां शैवागमानां शिवसूत्रादीनां वेत्ता ज्ञाता (शेषषष्ठ्या समासः) तथा वेदानां चतुर्णां तत्त्वार्थस्य दुर्बोधार्थस्य बोधे ज्ञाने विमलतराऽतिशयेन विमला स्फटिकवद्यथार्थबोधकरी मतिर्मननशालिनी बुद्धिर्यस्य सः एवंभूतः पव्येक इति नाम यस्य स विप्रः कश्चिद् ब्राह्मणोऽभूत् । तस्य पव्येकनाम्नो विप्रस्य सूनुः पुत्रः शिवचरणयुगस्य महादेवपादपद्मद्वन्द्वस्य आराधने सेवायाम् एकाग्रं समाहितं चित्तं चिन्तनशीलं मनो यस्य सः केदारो नाम विद्वान् अभूत् । तेन केदारेण अभिरामम् अभिन्नलक्षय लक्षणयुतत्वेन प्रस्तारादिस्वच्छप्रक्रियादिगुणवत्त्वेन च मनोज्ञम् इदं पूर्वोक्तं वृत्तरत्नाकराख्यं तदभिधं छन्दः छन्दोग्रन्थः प्रविरचितं सुनिर्मितम् इति शिवम् ॥

अन्वयः—

प्रकटगुणगणः शैवसिद्धान्तवेत्ता वेदतत्त्वार्थ बोधे विमलतर मति पव्येकनामा विप्रः कश्यपस्य वंशे अभूत् । शिवचरणयुगाराधनैकाग्रचित्तः केदारः तस्य (पव्येकनाम्नो विप्रस्य) सूनुः अस्ति । तेन अभिरामं वृत्तरत्नाकराख्यम् इदं छन्दः (तद्ग्रन्थः) प्रविरचितम् ॥

भावार्थः—

अब उपसंहार करता है ।

**वंश** इति स्पष्ट २ गुण समूहों वाला शैवशास्त्र के जानने हारा वेद के असली अर्थ बोध में बहुत निर्मल बुद्धि युक्त पव्येक नामक एक कश्यप ऋषि के वंश में ब्राह्मण होता भया

शिवजी के चरणयुग के आराधन में एकाग्रचित्त वाला पं० केदार उसका पुत्र हुआ। उस केदार पण्डित ने बहुत ही बढ़िया वृत्तरत्नाकर नाम यह छन्दोग्रन्थ बनाया है॥१०॥

श्रीजेजोंमधुदापुरीयविबुधः श्रीकेशवोऽभूदिदम् ।
यच्छिष्यादिपरम्परावृतमहीचक्रं सुविद्यागृहम् ।
पौत्रस्तस्य मुकुन्दलाल इति तत्पौत्रश्च खेदाद्गृहाद् ।
जम्बूमेत्य सुपाठनेन सुमतो रामप्रपन्नोऽवसत् ॥
संवस्येह गिरोऽङ्घ्रिपद्मयुगलं संसेव्य देव्याश्चिरं
स्वायासेन च शास्त्रदुर्गमहतो विद्यापुरस्यान्तरम् ॥
निर्विश्य प्रविविच्य काव्यसुषमारामे परिभ्राम्यति
काव्यव्याकृतितीर्थशास्त्रिपदवीं प्राप्तोऽपि कालं नयन् ॥
योऽयं पाठं पाठमाद्यां सुविद्यां ग्रामे ग्रामे छात्रवर्गेण साकम् । ॥
स्वीयां कीर्तिं चन्द्रिकां विप्रकीर्य नित्यं वृद्धयोदेति शुक्ले व चन्द्रः
रघुपतिनिलयेसौ पाठशालाग्रपाठी हरिपदकमलाग्रे वृत्तरत्नाकरीयम्
शुभमुपनयतीमं संग्रहं संप्रपूर्य भवतु विबुधगेहेष्वास्थितस्तन्मुदेयम् ॥
कश्मीरादिकनीवृत्तां मणिनिभे धर्मावतारे प्रभौ ।
श्रीमच्छ्रील—प्रतापसिंहनृपतिप्रष्ठे प्रजाः रक्षति ।
खर्ष्यङ्केन्दुमिते शुचावहितिथौ श्रीवैक्रमे वत्सरे ।
टीका संग्रहनामिकान्तमगमच्छ्रीवृत्तरत्नाकरे ॥

इति वृत्तरत्नाकराख्यच्छन्दोग्रन्थस्य रत्नसंग्रहव्याख्यायां षष्ठोऽध्यायः

एषोऽन्वयावलियुतो ननु वृत्तरत्नभाषाप्रभाकर इहेति हितः सुपूर्तिं ॥
संशासके नवनृपे हरिसिंहवीरे कश्मीरजम्बु सुविशां निजकार्यदक्षे ॥
वैक्रमे नेत्रवस्त्रङ्कभूमिते वत्सरेकृत ॥
रघुनाथालये पाठी सिते मार्गाष्टमीतिथौ ॥

*इति श्री वृत्तरत्नाकर की भाषाप्रभाकर नाम टीका में छठा अध्याय समाप्त हुआ*

* समाप्तश्चायं सव्याख्यो ग्रन्थः *

॥ शुभमस्तु ॥

# अथ विदितमस्तु वः

यदयं बृहत्रत्नाकरग्रन्थो रत्ननिधिरेव श्रीमत्करकमलमलङ्कुरुते यद्गुणवर्णनं करकङ्कणस्येव हस्ततलस्थितधात्रीफलस्येव च विफलम् एवं निखिलकार्ययोगी परीक्षोपयोगी (१-२-३-४-५) पञ्चाध्यायात्मकः प्रपन्नालोकाख्यया व्याख्यया सनाथः

## निरुक्तग्रन्थोऽपि

रचितस्तिष्ठति चिरतः यत्र पूर्वोत्तरपक्षावेवंभूतया सरलया शैल्या न्यस्तौ। यावदवलोक्यैव विज्ञानां जिज्ञासूनां जनानां मनांसि प्रमोदपयोनिधाविव निमज्जति नयने प्रेयोमुखचन्द्रे इव विलीयेते शेमुखी परमात्मनीव तादात्म्यमाश्रयति। तनीयसैवायासेन महतो महतो विषयान् पारयते वेत्तुम्। ये खलु विहायैनमन्यत्र श्रास्यन्ति ते विष्णुं परिहृत्य सुरान्तरान्भजन्ते।

**विदग्धमुखमण्डनमपि** अनयैव **कुञ्चिकया** विदग्ध-मुखमण्डनम् अन्यथा तु तन्मुद्रणमेव। येऽत्र मणिगणा यन्त्रपिहित मञ्जूषायामिव निहितास्ते एनां कुञ्चिकाख्यां व्याख्यामन्तरा न स्वापाः शीघ्रतः, अतो विधीयतामस्य ग्रहणे त्वरा तनीयाञ्शिष्यते ग्रन्थनिचयः येन नानुतप्येतेति मू० १)

**तर्कसंग्रहः** श्रीचेतनानन्द-- पं० परमानन्दशास्त्रि ( हिन्दी प्रभाकरा ) भ्यां विरचितयाऽतरलया सरलया हिन्दीभाषया समलंकृतो मुद्रितोऽस्ति। यः प्राज्ञवर्गस्यात्यन्तं गुरुरिव हितकरोऽपरः॥ प्राज्ञपरीक्षोपयोगिप्रश्नोत्तरान्वितश्च मू० ॥।) छात्रार्थम्

**अमरकथा** कथावाचकानां विदितमेवैतत् यद्देव्याः पार्वत्याः परमया प्रेरणया आग्रहवचसा च अमरस्वामिनाऽकामिना हिमालयाचले निर्जीवां विधायाशेषामरण्यानीं देव्यै श्राविता अमरकथा। किन्तु कासौ कथा कथं कुत्र श्राविता कथं चानवधानेनामानेन भगवत्यानावधारिता एतदखिलमिह लभ्यते। यत्काश्मीरिके हिमानी समावृते गिरावमरगुहायां सुधा (हिम) लिङ्गस्य वर्षमध्ये एकस्मिन्नेव

रक्षापूर्णिमासनाथेऽहनि दर्शनं भवति देवस्य दैवेन। तत्र सर्वेऽपि संघीभूय गच्छन्ति कस्य वा सिंहव्यालव्याघ्रादिसमाकुले विषमे हिमच्छन्नशिखरेऽस्ति गतिरेकाकिनो मनुजतनुजस्यैतु धीरस्यापि तुहिन पिहितसुनद्धसेतुनाकेतुनानिकेतनेन यमसदनस्येव पथा; किञ्चाद्यापि कलिकाले यत्र समस्तं चमत्कृतयोवलोक्यन्ते सुरासुरस्य, शिलीभूताः कपोतवेषाश्च प्रमथास्तथैव तिष्ठन्ति मानवाकाराः यत्र च क्रमशः कला शश्च सितासितयोर्दलयोरुपचयापचयाभ्यां हिमलिङ्गं स्फाटिकमिव व्यपोहति दर्शकमनुजदुरितानि शतानि तानि। एतं निःशेषं कथाविशेषं मनश्चेज्ज्ञातुं तदेदं पुस्तकं क्रीयतामाशु साधारणानां मनुष्याणां सुज्ञानायेह स्वामिश्रीसरस्वतीगिरिमहोदयैर्भूतपूर्वामरनाथमठाधीशैः सुयोजितास्ति विद्वत्साहाय्येन भाषा टीका मू० ॥।)

## अयं पुस्तकालयः

सप्ततिवर्षतो दैवीं वाचं भूदेवानितरांश्च सत्पुरुषान् यथाकालं-यथायोगं च सेवमान आस्ते अद्यावधि विबुधवाणीविबुधा एतस्मिन्नतिकरुणयेदृशं दृशं संचारयन्तः अस्माकमुद्योगं कृतार्थयन्ति।

स्वरूपेणाऽधुनायममुना नितान्तं कान्तं कायं विधाय विहाय च कञ्चुकमिव प्राचीनतावाप्तां हीनतां सर्वथोदारभावं स्वभावमापद्यते यथा २ तत्रभवतां भवतां भवत्यावश्यकता। तथा २ पूरयितुमुद्युङ्क्ते।

तनीयसः समयतः खलु अस्यैवातिमनोहरा एषा शाखा प्रादुरभूत्। या निजेन लावण्येनातिमूलं वर्द्धमाना श्रीमतां सविशेषां शुश्रूषां विधातुमीहते केवलं भवदीयां करुणामभ्यर्थयते इयतैव मोदते मोदकेन, एष च शुद्धसुन्दरनानाकारलघुनिष्क्रयग्रन्थरत्नाकरः,

इति शिवम् निवेदकः

लक्ष्मणदास प्यारेलाल

संस्कृतमहापुस्तकालय लोहारी गेट लाहौर

## पञ्जाब यूनीवर्सिटी द्वारा प्राज्ञ परीक्षा के लिये १९२७ तथा २८ के लिये नियत पुस्तकों का

## ❀ सूचीपत्र ❀

प्रथमपत्र— १ पुरुरूपरूपनिरूपणम् पं० शिवदत्त कृत १॥)
२ विक्रमोर्वशीयम् पं० जीवानन्दकृत टीका कलकत्ता १)
द्वितीयपत्र— १ पञ्चतन्त्र पं० जीवानन्दकृत टीका कलकत्ता* ३)
तृतीयपत्र— १ व्यक्तगणित सार संग्रह-म० म० पं० शिवदत्तकृत* १॥)
२ भारत भूगोल ... ... ... ।=)॥।
३ भारतवर्ष का इतिहास ईश्वरीप्रसाद प्रथम भाग ॥।=)
चतुर्थपत्र— १ वृत्तरत्नाकर-पं० रामप्रपन्नकृत ३ टीका नूतन* २)
२ तर्कसंग्रह पं० नृसिंहदेवकृत बालबोधिनी टीका* ।-)
तर्कसंग्रह भाषाटीका और प्रश्नोत्तरी सहित पं० परमानन्द कृत विद्यार्थियों के लिये उपयोगी है १)
पञ्चमपत्र— १ लघुसिद्धान्तकौमदी—सटिप्पण ॥)
लघुसिद्धान्तकौमदी रणछोड़कृत संस्कृतटीका* १॥)
षष्ठपत्र— १ संस्कृत से हिन्दी तथा हिन्दी से सं० में अनुवाद।

---

### सन् १९२८ के लिये यही पुस्तक बदले हैं।

द्वितीयपत्र— १ पञ्चतन्त्र प्रथम द्वितीय तथा तृतीय तन्त्र
२ स्वास्थ्यवृत्ति सूत्र स्थान अध्याय पञ्चम से अष्टम तक चरकसंहिता म० म० पं० शिवदत्त संगृहीत।
तृतीयपत्र— १ गणितकौमुदी म० म० पं० शिवदत्त कृत सजिल्द १
चतुर्थपत्र— १ वृत्तरत्नाकर पं० रामप्रपन्न शास्त्रि कृत रत्नसंग्रह अन्वयबोधनी भाषाप्रभाकर तीन टीकाओं सहित
पञ्चमपत्र— १ मध्यकौमुदी म० म० पं० शिवदत्त संग्रहीत।

---

नोट—यह पुस्तक केवल इस पुस्तकालय से ही प्राप्त होंगे। और न प्रकार के सर्व पुस्तक परीक्षा तथा विषयान्तरों के हमारे से उपलब्ध हो सकते हैं

**लक्ष्मणदास प्यारेलाल संस्कृत-महापुस्तकालय**

**लुहारी गेट लाहौर।**